# जैमिनीयसूत्रम्

विद्यारसिकानां विनोदाय वास्तवपथप्रदर्शनाय
ज्यौतिषाचार्य ज्यौतिषतीर्थ विज्ञानभूषण
काशी हिन्दू-विश्वविद्यालय
प्रधान ज्यौतिषाध्यापक
**श्री रामयत्न शर्म**
कृत टीका द्वयोपेतं
सोदाहरणम्

तेनैव संशोध्य प्रकाशितम्

---



तृतीयावृत्तिः ] [

## प्राक्कथन

ज्यौतिष शास्त्र, कैसा, उपयोगी शास्त्र है यह बात किसीसे छिपी नहीं है। फलित विषयमें, जैमिनीय सूत्रके ऐसा उत्तम ग्रन्थ भी कोई नहीं मिलता यह भी प्रसिद्ध है। इसकी कोई उत्तम टीका नहीं थी यह एक बड़ा भारी अभाव था। श्री गुरू भगवानकी दयासे उस अभावकी पूर्ति कर इस टीकाको मैंने प्रथमा वृत्ति सं० १९६० में छपायी पर उस समय केवल संस्कृत टीका हो बनी थी उसके बाद हिन्दी टीका के साथ इस पुस्तक की द्वितीया वृत्ति छपी परन्तु प्रेसकी भूलसे कई स्थानोंमें त्रुटि हो गई—तथा कई जगह हिन्दी टीका संकुचित थी इन सब अभावोंको हटा कर उदाहरणके साथ सर्वाङ्ग सुन्दर बनाकर इस पुस्तकको तृतीय आवृत्ति द्वारा मैं विद्वानोंकी सेवामें अर्पण करता हूँ। आशा करता हूँ कि विद्वज्जन मेरी ढिठाईको क्षमा कर इस पुस्तकसे लाभ उठा मुझे उत्साहित करेंगे।

श्री रामयत्न ओझा

---

## शुद्धाशुद्धि पत्रम्

| शुद्धम् | अशुद्धम् | पृ० | पं० |
|---|---|---|---|
| द्रष्टृग्रहोपरि | द्रष्टुर्ग्रहोपरि | ६ | ५ |
| इतिपदच्छेदं | इतिदच्छेदं | ७ | १२ |
| ग्रह | हय | १२ | ४ |
| मनुयुक् | मनुयुक | २९ | ९ |
| सम | समे | ३० | ६ |
| चरदशाया आनयनं | चरदशाया नयनं | ३३ | १९ |
| केनचिद्गणिता | केनचितगणिता | ३७ | २३ |
| कुजराह्वोरूपरि | कुजराहोरूपरि | ६३ | १७ |
| तस्मिन्नमार्गेण | तस्मिनमार्गेण | ६७ | १९ |
| पीडां | पीडा | ७७ | १६ |
| द्विसप्तत्या पुरस्तान् | द्विसप्तत्यात्पुरस्तान् | ९५ | १० |
| पूर्वं | पूवं | ११० | २२ |
| यथाश्रयं | यथाश्रय | १११ | २२ |
| सर्पजल | सपजल | १२१ | १७ |
| निसर्ग | निसग | १२५ | १५ |
| कुण्डली | कुणुली | १४६ | १ |
| हुई | हुभू | १५४ | ९ |

श्रीगणेशाय नमः ।

# जैमिनीयसूत्रम् ।

## सूत्रार्थप्रकाशिकोपेतम् ।

स जयति सिन्धुरवदनो देवो यत्पादपङ्कजस्मरणम् ।
वासरमणिरिव तमसां राशिं नाशयति विघ्नानाम् ॥ १ ॥
भवभीतिहरां चतुर्भुजां सकलार्थप्रतिपत्तिदायिनीम् ।
निजभक्तजनैकपालिकां वरदात्रीं प्रणमामि कालिकाम् ॥ २ ॥
अशरणशरणं दीनानाथं वरमतिसहितं कृतबहुचरिम् ।
ज्ञानसुलभ्यं शङ्कररूपं नौम्यवधेशं लब्धधरेशम् ॥ ३ ॥

अथ मङ्गलं तावत्त्रिविधं नमस्कारात्मकं वस्तुनिर्देशात्मकं आशीर्वादात्मकं च तत्र मुनि प्रणीतेषु ग्रन्थेषु वस्तुनिर्देशात्मकस्यैवाचारात्सकल लोकोपकारेप्सुः श्रीमज्जैमिनिमहर्षिः—
तदेव मङ्गलमाचरति ।

### उपदेशं व्याख्यास्यामः ॥ १ ॥

उपदिश्यते प्रकाश्यते प्राक्तनकर्म सम्बन्धि फलं येनेपत्युदेशो जातकशास्त्रविशेषस्तं व्याख्यास्यामः कथयिष्यामः। अथवा शिष्टाचारात् उः शङ्करः "उकारः शंकरः प्रोक्तः—इत्युक्तेः" पदं स्थानं यस्याः सा उपदा तत्सम्बोधने हे उपदे जगदम्बिके शं लोकानां कल्याणं येन भवति तच्छास्त्रं फलितज्यौतिष रूपं

तं व्याख्यास्यामः कथयिष्यामः । अथवा उपदेशं शंकरं व्याख्यास्यामः नमस्कूर्मः । उपसर्गेण धात्वर्थो बलादन्यत्रनीयते इति न्यायात् वि आङ इत्युपसर्गरूपयोगात् व्याख्यास्यामः नमस्कूर्म इति नीलकण्ठ व्याख्या । अथवा

"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठंभित्वा विनिष्क्रान्तौ स्यातां मङ्गल वाचकौ"

इत्यनेन उपदेशः आद्योच्चारणम् आद्योच्चरितमोंकारः तं तत्कला रूपाणां ग्रहाणां फलविचारादिरूपं ज्ञानं व्याख्यास्यामः कथयिष्यामः अत्र प्रथमार्थ एव समीचीनः । उक्तं च

यदुपचितमन्यजन्मनिशुभाशुभंतस्यकर्मणाः पंक्तिम् ।

व्यंजयति शास्त्रमेतत् तमसि द्रव्याणि दीपइव ।

नीलकण्ठ व्याख्यातु न समीचीनायत उःपदरूप एव शङ्करः न तु उपदेशः तथा व्याख्या स्यामः अस्य नमस्कूर्मः अर्थोपिनो पयुक्त इति ।

जेहि सुमिरे सब काल, ज्ञानभानु घन तिमिर मँह ।

उदय होत सुविशाल, वन्दौ गुरुपद कमल रज ॥

"उपदेशं व्याख्या स्यामः" उपदेश, जिस शास्त्र से मनुष्य के पूर्व जन्म कृत कर्म सम्बन्धि शुभाशुभ फलों का ज्ञान हो" उस शास्त्र को कहता हूँ । अथवा

"उपदेशं व्याख्या स्यामः"

उपदे हे जगदस्वे शं लोकों का जिस शास्त्र से कल्याण हो उस शास्त्र को कहता हूँ । या तीसरा अर्थ है कि शिवजी को प्रणाम करता हूँ । या चौथा अर्थ यह है कि उपदेश ॐकार का नाम है अर्थात् उसकी कला रूप सूर्यादि ग्रहों के तथा राशियों के फल का विचार जिस शास्त्र में हो उसकी व्याख्या करता हूँ ।

अथास्मिन् ग्रन्थेऽन्यशास्त्रतो दृष्टेर्वैलक्षण्यं प्रतिपादयति।

## अभिपश्यन्त्यृक्षाणि पार्श्वभे च ॥ २ ॥

"नामैकदेशेन नाममात्रस्यापि ग्रहणम्"-इति न्यायादत्र च-शब्देन चरस्य ग्रहणम्। अर्थात् चकाराच्चराणि ऋक्षाणि अभि यथा स्यात् तथा पार्श्वभे पश्यन्ति। इत्यत्र वृद्धवाक्यात् सन्देहनिवृत्तिः।

यथा

"चरं धनं विना स्थाणुं स्थिरमन्त्यं विना चरम्।
युग्मं स्वेन विना युग्मं पश्यतीत्ययमागमः॥

पार्श्वभे इति सप्तम्या एकवचनं न तु द्वितीयाया द्विवचनम्। चरस्य पार्श्वयोर्द्वौ राशी। अग्रे स्थिरः पृष्ठे द्विस्वभावः। तेन चरं धनं विना इत्युक्तत्वाद्दक्षिणपार्श्वस्य ग्रहणं कृतमाचार्येण। अर्थाच्चरराशयो दक्षिणपार्श्वस्थं सर्वं स्थिरराशिं पश्यन्ति किन्तु द्वितीयस्थंस्थिरराशिंत्यक्त्वा। इत्यनेनैव स्थिरस्यापि दृष्टिः सिद्धा। यतो यदाचरराशिर्द्वितीयं स्थिरं हित्वा सर्वान् स्थिरान् पश्यति तदा स्थिरराशिरपि द्वादशस्थं चरं हित्वा सर्वान् चरान् पश्यति। द्विस्वभावस्तु स्वेन विना सर्वान् द्विस्वभावान् पश्यति। यतस्तत्र यश्चरात्मको भागस्तस्य द्वितीयस्थिररूपो विभागोऽपि तत्रैव वर्त्तते। तथा च यः स्थिरात्मको भागस्तस्य यो द्वादशरूपश्चर विभागः सोऽपि तत्रैव वर्त्तते। तेन स्वशरीरमेव हित्वा सर्वानवशिष्टान् द्विस्वभावान् पश्यति। ऋषिणा तु द्वितीयद्वादशत्यागरूपविशेषस्य प्रसिद्धत्वात् अभि यथा स्यात् तथा पार्श्वभे पश्यन्ति इत्येवमुक्तम्। एवमर्थे स्वीकृते कारिकायाः सूत्रेण सहैक्यं स्यात्। अभि सम्मुखं पार्श्वभे च पश्यन्तीत्यत्र सर्वेषां राशीनां विचित्रं सम्मुखपार्श्वत्वम्। यद्यपि राद्धान्ते

तदेव वस्तु सिद्ध्यति तथाऽपि विचार वैलक्षण्यं गौरवम् । यथा चरेऽष्टमपञ्चमैकादशराशयः। तत्राष्टमो राशिः सम्मुखः पञ्चमैकादशौ पार्श्वौ । स्थिरे षष्ठतृतीयनवमराशयः—तत्र षष्ठराशि सम्मुखः तृतीयनवमौ पार्श्वौ । द्विस्वभावे सप्तमचतुर्थ दशमराशयः तत्र सप्तमो राशिः सम्मुखः दशमचतुर्थौ पार्श्वौ। विचारदृष्ट्या सम्मुखत्वे पार्श्वत्वे च द्विस्वभावे यो नियमः स एव सर्वत्र भवितुमर्हति । यतः कुण्डल्यां सप्तमस्य सम्मुखत्वं-सर्वैः स्वीकृतम् । दक्षिणपार्श्वस्था द्वितीयतृतीय चतुर्थपञ्चमषष्ठ-राशयो वामपार्श्वस्था द्वादशैकादशदशमनवमाष्टमराशयः एतेषां मध्यात् चतुर्थदशमौ पार्श्वत्वेन ग्रहणयोग्यौ । परन्तु सुबोधिनीकारेण विचित्रारीतिः स्वीकृता ।

"स्थिरराशेः षष्ठराशिश्चरस्याष्टम एव सः ।
द्विस्वभावस्य राशिस्तु सप्तमः सम्मुखो मतः" ॥

इति यत् काशिकायामुक्तं तदपि स्वकल्पितमेवेति। दृष्टिचक्रं तु द्विविधम् । वर्तुलचक्रं निर्माय तत्र द्वादशविभागं कृत्वा राशीन् संस्थाप्य चरादिराशिषु यथोक्तदृष्टिस्थाने सूत्रं नेयम् । एवं कृते सुगमेन चरेऽष्टमपञ्चमैकादशराशयो दृग्योग्या भवन्ति। स्थिरे षष्ठतृतीयनवमराशयो दृग्योग्या भवन्ति। द्विस्वभावे सप्तमचतुर्थदशमराशयो दृग्योग्या भवन्तीति सर्वेषां सिद्धम् ॥ २ ॥

भा०—राशि जिस प्रकार शास्त्रप्रसिद्ध हो अपने पार्श्व के राशिको देखते हैं अर्थात् चर द्वितीय को छोड़ सब स्थिर को, स्थिर द्वादश को छोड़ सब चर को, द्विस्वभाव अपनेही को छोड़ सब द्विस्वभाव को देखता है। नीलकण्ठ ने इसका अर्थ यह लिखा है कि राशि सब अपने सम्मुख और पार्श्व को मिलकर तीन तीन राशियों को देखते हैं। परन्तु इस अर्थ में चर, स्थिर और द्विस्वभाव राशियों के लिए अलग अलग सम्मुख और पार्श्व

की कल्पना करनी पड़ती है जो किसी पुस्तक में नहीं मिलती इस कारण यह अर्थ ठीक नहीं है—पन्थ टीकाकार ने एक श्लोक अपना कल्पित सम्मुख के लिख दिया है यह भी ठीक नहीं है।

ग्रहदृष्टिंदर्शयति—

## तन्निष्ठाश्च तद्वत् ॥ ३ ॥

तन्निष्ठास्तेषु चरादिराशिषु स्थिताः ग्रहाश्च तद्वत् तैः राशिभिस्तुल्यं स्वस्थितराशिवदेव पश्यन्ति। चरराशिषु गता ग्रहा द्वितीयस्थं स्थिर राशिं ग्रहं च हित्वा सर्वान् स्थिरराशीन् स्थिरस्थग्रहांश्च पश्यन्तीत्यर्थः। एवमेवाग्रेऽपिबोध्यम्।

अत्रापि पूर्वकारिकानुरूपमेव वृद्धवाक्यम्।

"चरस्थं स्थिरगः पश्येत् स्थिरस्थं चरराशिगः।
उभयस्थं तूभयगो निकटस्थं विना ग्रहम्" इति ॥३॥

चरादि राशियोंमें रहने वाले ग्रह उन्हीं राशियों के सदृश देखते हैं।

अर्थात् चर में रहने वाले अपने द्वितीयस्थ राशि और ग्रहों को छोड़ सब स्थिर राशि तथा उसमें रहने वाले ग्रहों को, स्थिर में रहने वाले अपने द्वादशस्थराशि ग्रह को छोड़—बाकी चरराशि तथा चरस्थ ग्रह को, एवं द्विस्वभाव में रहने वाले ग्रह अपने ही राशि को छोड़ बाकी सब द्विस्वभाव तथा उसमें रहने वाले ग्रहों को देखते हैं।

अथ "पत्नीलाभयोर्दृष्ट्यानिराभासार्गलया" इत्यादि सूत्रेषु अर्गलशब्दबोध्यपदार्थं दर्शयति।

## दारभाग्यशूलस्थाऽर्गला निध्यातुः ॥ ४ ॥

निध्यातुर्द्रष्टुर्ग्रहादारभाग्यशूलस्था अर्गला भवति। अर्थान्निध्यातुः सकाशाद्दारभाग्यशूलस्थाश्चतुर्थद्वितीयैकादशस्थानस्थिता

ग्रहा अर्गला योगकर्त्तारो भवन्ति। यत् तु सुबोधिनी कारेण विचाराश्रयीभूतस्य राशेर्निध्यातुर्द्रष्टुर्ग्रहात् दारभाग्यशूलस्था दारादिपदबोध्यचतुर्थद्वितीयैकादशस्थानस्थिता ग्रहा विचारा श्रयीभूतराशिद्रष्टुर्ग्रहस्य अर्गला अर्गल संज्ञका अर्गलाकर्त्तारः" इत्यनेन द्रष्टुर्ग्रहोपरि अर्गला भवति इत्युक्तं तदसङ्गतम्। एवं चेत् तदा दारभाग्यशूलस्थार्गलाग्रहात् इत्येवं सूत्रं प्रणीतं स्यात्। निध्यातुरिति प्रयोगान्निध्यातुः सकाशाद्यदि एतत्स्थान गता ग्रहाभवन्ति तदातद्राशावेवार्गला भवति इत्येवार्थः सङ्गच्छते यतः कस्य निध्यातुरित्युत्कण्ठा सहसैवोत्पद्यते। ऋषिणाऽप्येत- दाशयेनैव "पत्नीलाभयोर्दिष्ट्यानिराभासार्गलया"-इति उक्तम्। तेन भावोपर्यैवार्गलाभवति न तु ग्रहस्योपरि।

"भयपुण्यविनाभावा द्रष्टुराहुः शुभार्गलम्"-इति।

वृद्धवाक्यात् निध्यातुरिति पदस्य द्रष्टुरित्यर्थो युक्तो न स्वामि नोक्तः फलदातुः। ऋषिणा स्वकीये ग्रन्थे अर्गलाविरोधि चेति पद- द्वयं शुभार्गलविपरीतार्गलस्थाने दत्तम्। अन्यथा "शुभार्गलमर्गला- विप्रतिबन्धकत्वं तथाऽऽर्गलविरोध्यर्गलमेव विपरीतार्गलम्" इत्यर्थे स्वीकृते अर्गलाशुभार्गला विपरीतार्गला चेति प्रकारत्रय- मुत्पद्यते परन्तु प्रकृते वर्तमानार्गलाया बाधकत्वात् शुभा- र्गलत्वाभावान्नायमर्थो युक्तः। यत् तु छन्दोवत् सूत्राणि"-इत्याद्यु- क्तेरत्र सन्धिश्छान्दस इति नीलकण्ठेनोक्तं तदसमीचीनम्। यतोऽर्गलशब्दस्य स्त्रीलिङ्गे नपुंसके च पाठः। यथा "पत्नीलाभ- योर्दिष्ट्या निराभासार्गलया" इत्यत्र स्त्रीलिङ्गे पाठः शुभार्गले धनसमृद्धिरित्यत्र।

"भयपुण्यविनाभावा द्रष्टुराहुः शुभार्गलम्"।

इत्यत्र च नपुंसके पाठः। तेन दारभागशूलस्थार्गला निध्यातु- रित्यत्र अर्गलाशब्दस्य स्त्रीलिङ्गत्वकल्पने निध्यातुर्द्रष्टुर्ग्रहात्

दारभाग्यशूलस्था अर्गला भवति—इत्यस्मिन्नर्थे संहितायां न दोषः । तर्हि यदि सुगमेन दोषनिर्वाहः स्यादेव तदा कथं व्यर्थ-दोषारोपणम् । अस्मिन्ग्रन्थे कटपयादिक्रमेणाङ्का ग्राह्याः सर्वत्र सवर्णाभावराशयश्च"—इत्युक्तत्वात् ।

वृद्धकारिका च ।

"कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः ।
नञे च शून्ये ज्ञेये तथा स्वरे केवले कथितम्"–इति ।

तत्र द्वादशाधिके द्वादशतष्टं कृत्वा शेषेण राशिभावबोधः कार्यः । यथा दारेत्यत्र "अङ्कानां वामतो गतिः"—इत्यनेन दकारस्याष्टसंख्या रकारस्य द्विसंख्या अष्टाविंशतिमिते द्वादशतष्टे शेषं चतुर्मितं भावबोधकमित्यादि स्वामिनाटीकाकर्त्रा "दार-भाग्यशूलस्थार्गलानिध्यातु" इतिदच्छेदंकृत्वा ध्यातुः द्रष्टुः दारभाग्यशूलस्थानि, अर्गलानि भवन्ति, इत्यर्थः कृतः सोपि-युक्तः । इयमर्गला शुभग्रहेण यथा भवति तथैव पापग्रहेणापि तेनशुभपापोभयसाधरणीत्यलम् ॥ ४ ॥

भा०—जिस किसी भावका विचार किया जाय उसके देखनेवाले ग्रहसे (दार) चतुर्थ (भाग्य ) द्वितीय और (शूल) एकादश में यदि कोई ग्रह पड़ा हो तो जिस भाव का विचार किया जाता है उस भाव पर अर्गल नामक योग होता है । पं० नीलकण्ठ ने अपनी टीका में ग्रहों पर अर्गला का होना लिखा है सो अशुद्ध है क्योंकि ग्रह पर अर्गला का फल इस पुस्तक में नहीं है-तथा भावार्गला का फल पाया जाता है । इस ग्रन्थ में अक्षरों के वश ही भावों का बोध होता है। कसे झ तक नवसंख्या टसे ध तक नवसंख्या, प से म तक पाँच संख्या य से ह तक आठ संख्या न, ञ और केवल स्वर बिलकुल शून्य हैं संयोगी अक्षर का अन्त्य अक्षर संख्या के लिये लेना यही क्रम

है जैसे दकी आठ संख्या और रकी दो संख्या इसको क्रम से रखने से २८ हुवा इसमें १२ का भाग देनेसे चार बचा इस कारण दारका अर्थ ४ है यानी यहां भावकी संख्या जाननी है इस कारण चतुर्थभाव हुवा। अर्गलायोग शुभग्रहवश हो या पापग्रह के वश हो फल इसका सर्वदा शुभ है। इस अर्गलाका भंगयोग भी आगे है। नीलकण्ठने अपनी टीकामें ग्रहोंपर अर्गलयोग लिखा है सो ठीक नहीं है क्योंकि ग्रहपर अर्गलयोग का वर्णन इस पुस्तकमें नहीं है केवल भावपर ही अर्गलयोगका फल लिखा मिलता है। स्वामी टीकाकारने "निध्यातुः" इसका अर्थ "फलदातुः" लिखा है। ग्रह सभी फलद होते हैं इसलिए द्रष्टुः यही अर्थ ठीक है क्योंकि किसी भावको देखनेवाले नियत समयमें निश्चित ही होंगे। नीलकण्ठने सन्धिका भी दोष दिया है परन्तु अर्गला शब्द स्त्री लिङ्ग माननेसे सन्धि होनेमें दोष नहीं पड़ता, स्वामी टीकाकार ने "दारभाग्य शूल स्थार्गलानि ध्यातुः" ऐसा पदच्छेद कर वही अर्थ लिया है यह भी उचित है। यह अर्गला जैसी शुभग्रहोंसे होती है वैसी ही पापग्रहोंसे भी होती है इस कारण इसको "शुभपापोभय साधारणी" कहते हैं ॥४॥

अथान्यदर्गलायोगमाह—

## कामस्था तु भूयसा पापानाम् ॥ ५ ॥

पूर्वसूत्रान्निध्यातुरितिपदमनुवृत्य निध्यातुः कामस्था तृतीयस्थानस्था याऽर्गला सा तु पापानां भूयसा बाहुल्येन भवति एकेनपापेनद्वाभ्यां च नेत्यर्थः नीलकण्ठेन रविक्षीणचन्द्रभौमशनिराहुकेतुपापयुतबुधानामिति पापानां—यदुक्तं तदसंगतम् यतः पापग्रहाः शुभग्रहाश्च वृद्धेनान्यादृशा उक्ताः—

यथा—

"अर्कारमन्दफणिनः क्रमात् क्रूरा यथाऽऽश्रयम् ।

चन्द्रोऽपि क्रूर एवात्र क्वचिदङ्गारकाश्रये ॥

गुरुध्वजकविज्ञाः स्युर्यथापूर्वं शुभग्रहाः" ॥ इति ॥

अत एतेषां पापानां भूयसा बाहुल्येनार्गला भवत्यर्थाद्यदि त्रिप्रभृतिभिः पापैः कामस्थैस्तदाऽर्गला भवति । एकेन द्वाभ्यां च नेत्यर्थः । प्रेमनिधिपण्डितैस्तु "निध्यातुर्द्रष्टुर्ग्रहात् कामस्था या ऽर्गला सा तु पापानां मध्ये यो ग्रहो भूयसाऽधिकांशमालम्ब्यस्थितस्तेन भवति"-इति यदुक्तं तदसङ्गतम् यतो भूयसा इति पदेन पापबाहुल्यमेवायाति नांशबाहुल्यम् । तृतीयस्थानोद्भवाया अर्गलाया बहुपापकृतत्वात् तथा निर्बाधकत्वाच्चेदं पृथक् सूत्रम् । अथ वा पापानां सम्बन्धेन कामस्था तृतीयस्थानस्था याऽर्गला साभूयसा बलयुक्ता भवति बाधकरहिता इत्यर्थः । स्वामिना कृतोयमप्यर्थो युक्तियुक्त इति ॥५॥

भा०—इस ग्रंथमें सूर्य मंगल शनि और राहु पापग्रह कहे जाते हैं । यदि ये पापग्रहके राशिमें हों तो विशेष पापग्रह तथा शुभग्रहके राशिमें होनेसे अल्प पापग्रह होते हैं—और उत्तरोत्तर प्रबल पापग्रह हैं । कहीं मंगलके राशिमें यानी वृश्चिकमें रहनेसे चन्द्रमा भी पापग्रह समझा जाता है । इसी प्रकार बृहस्पति, केतु, शुक्र और बुध उत्तरोत्तर अल्पशुभग्रह होते हैं । यदि शुभग्रके राशिमें हो तो विशेष शुभग्रह तथा पापग्रहके राशिमें होनेसे अल्प शुभग्रह होते हैं । इस ग्रन्थमें द्रष्टा ग्रहसे (काम) तृतीय स्थानमें यदि कई पापग्रह यानी तीनसे अधिक पापग्रह हो तो भी अर्गल योग होता है तीनसे कम पापग्रहोंके रहनेसे नहीं होता । इस अर्गलाका विरोधी अर्गला नहीं है । इससे यह सूत्र अलग बनाया गया है प्रेमनिधि पन्तने यह

लिखा है कि जो पापग्रह सबसे अधिकांश हो वह यदि द्रष्टा-ग्रहसे तृतीयमें हो तो अर्गल योग होता है परन्तु यह अर्थ ठीक नहीं है क्योंकि भूयसा इस पदका अर्थ ग्रहोंकी अधिकता में होता है अंशोंकी अधिकता इससे नहीं निकलती पहली अर्गला शुभग्रह और पापग्रह दोनोंसे होती है और यह केवल पापग्रहों से ही होती है और पहले अर्गलाका बाधक योग है इसका बाधक योग नहीं है इसलिए यह अलग कही गई है। इसका दूसरा अर्थ यह भी होता है कि बहुत पापग्रहों के सम्बन्ध से, जो "द्रष्टाग्रह के तीसरे स्थान में हो" अर्गला होती है वह "भूयसा" अर्थात् बलवती होती है यानी उसका बाधक नहीं होता, यह अर्थ भी ठीक है। अगले सूत्रके देखनेसे तीसरा स्थान यदि तीनसे अधिक पापग्रहोंसे युक्त हो तो अर्गला करनेवाला और पहले सूत्रसे जो एकादश की अर्गला है उसका भंग करनेवाला होता है यह बात निकलती है इससे यह सिद्ध होता है कि—तृतीयमें यदि तीनसे अधिक पाप ग्रह होंगे तो एकादश वाली अर्गलाके प्रतिबन्धक होते हुए अपनी अर्गला करेंगे। तीन से कम पापग्रह या शुभग्रह तीन से कम या अधिक हों सभी हालत में प्रतिबन्धक ही होता है ॥५॥

पूर्वार्गलाबाधकानाह—

## रिःफनीचकामस्था विरोधिनः ॥ ६ ॥

निध्यातुर्द्रष्टुर्ग्रहात् रिष्फनीचकामस्था दशमद्वादशतृतीय-स्थानस्थाग्रहा विरोधिनोऽर्थात् दारभाग्यशूलस्थितानामर्गला कर्त्तृणां खेटानां क्रमेण रिष्फनीचकामस्था ग्रहा विरोधिनो भवन्त्यर्थादर्गलयोगभङ्गकरा भवन्ति। यदि दशमादिस्थानेषु ग्रहाभावश्चेत् तदा चतुर्थादिस्थानस्थैर्ग्रहैरर्गला भवति नान्यथा।

वृद्धकारिका च।

"भयपुण्यविनाभावा द्रष्टुराहुः शुभार्गलम्।

स्फुटगज्ञेयभावास्तु विपरीतार्गलं विदुः"। इति ॥ ६ ॥

भा०–देखने वाले से ( रिष्फ ) दशम ( नीच ) द्वादश और ( काम ) तृतीय में रहनेवाले ग्रह अर्गलयोग के विरोधी होते हैं। चतुर्थ का विरोधी दशम, द्वितीय का द्वादश, और एकादश के अर्गल का विरोधी तृतीयस्थग्रह होता है ॥६॥

अत्रापवादमाह—

## नन्यूना विबलाश्च ॥ ७ ॥

ये ग्रहाः प्रतिवन्धकस्थाने स्थिता अर्गलाकर्त्तृग्रहेभ्यो न्यूना विवला निर्बलाश्च ते प्रतिवन्धका न स्युः। अथादर्गलाकर्त्तृग्रहेभ्यः प्रतिवन्धका ग्रहाश्चेद्यदि न्यूना अल्पसंख्यकास्त्रयश्चेदर्गलाकर्त्तारो द्वौ चेत् प्रतिवन्धकौ द्वौ यद्यर्गलाकर्त्तारौ एकः प्रतिवन्धकस्तदा एवं प्रतिवन्धका न स्युः। तथा ये वक्ष्यमाणप्रकारेण निर्बलास्तेऽपि प्रतिवन्धका न स्युः। केचिदेवं व्याचक्षते वलप्रकरणे "अग्रहात् सग्रहो ज्यायान्" इत्युक्त तदा यो ग्रहोऽल्पसंख्यकः स निर्बल एव तेन न विवला इत्यनेनैव कार्यनिर्वाहः न न्यूना इति कथम्। अत्रोच्यते। उच्चस्थितः स्वगृहगश्च ग्रहोऽल्पसंख्यकोऽपि वली भवति उक्त च "न्यासयोः"—इत्यादि। तेन न न्यूना विवलाश्चेत्येवसुवचम्। अत्रेदमवधेयम्। यदि अर्गलाकर्त्तृग्रहा अधिकाः प्रतिवन्धका ग्रहान्यूनास्तदा प्रतिवन्धकग्रहसंख्यार्गलाकर्त्तृग्रहेभ्यो निर्बलक्रमेण विशोध्यशेषेणार्गलायोगोवाच्यः। एवं प्रतिवन्धकेऽपि इति ॥ ७ ॥

जो प्रतिवन्धक ग्रह अर्गलयोग करने वाले ग्रहकी अपेक्षा अल्पसंख्यक हों वा अर्गला करनेवाले से निर्बल हों वे प्रति-

वन्धक नहीं होते अर्थात् द्रष्टा ग्रह से ४ । २ । ११ में रहनेवाले ग्रह अर्गल योग करते हैं । तथा १० । १२ । ३ में अल्पसंख्यक वा निर्वल ग्रह न हों तो वे प्रतिवन्धक होते हैं । किसी का कहना यह है कि "अग्रहात्सग्रहो ज्यायान्" हय वल देखने की रीति से अल्पसंख्यक ग्रह दुर्वल होता ही है तो "न विवलाः" इतने ही से काम चलता सूत्र में "नन्यूना" कहना व्यर्थ है परन्तु ध्यान देने की वात है कि वलके प्रकरण में ही अल्पसंख्यक होनेपर भी उच्च और निज राशिगत ग्रह वलवान कहा गया है । इससे "नन्यूना विवलाश्च" यही सूत्र ठीक है ।

अथान्यामर्गलामुपदिशति—

**प्राग्वत् त्रिकोणे ॥ ८ ॥ विपरीतं केतोः ॥ ९ ॥**

अस्मिन् ग्रन्थे एकस्यैव भावस्यापेक्षायां संख्याप्रकारेण भाव वोधनं कर्तव्यम् । वहुभावानामपेक्षासत्त्वे शास्त्रान्तरप्रसिद्धकेन्द्र-त्रिकोणोपचयादिवोधकस्थानेभ्योऽपि व्यवहारः कार्यः इति केन्द्रादि संज्ञादर्शनात् स्पष्टम् । त्रिकोणे निध्यातुर्द्रष्टुग्रहात् पञ्चमनवमयोः प्रग्वदर्गलाप्रतिवन्धकश्च । अर्थात् पञ्चमे ग्रह-सत्त्वेऽर्गला नवमे न्यूनसंख्यात्वनिर्वलत्वदोषरहितग्रहसत्त्वे तत्प्रतिवन्धकः । परन्तु केतोर्ग्रहात् विपरीतमर्थात् केतुर्यदि-द्रष्टाचेत् तदा तस्मान्नवमे स्थिता ग्रहा अर्गलाकर्त्तारोभवन्ति तथा पञ्चमे स्थिता ग्रहास्तत्प्रतिवन्धकाः केतुपदंस्थानान्तरे-राहोरपि वोधकम् राहुकेत्वोर्गतिसाम्यात् । न च दारेत्यादि सूत्रे पञ्चमपदवोधकशान्तादिपदस्य रिप्फेत्यादिसूत्रे नवमपद-वोधकस्य धान्तादिपदस्योपादानात् पञ्चमनवमरूपार्थलाभे सूत्रान्तरनिर्माणस्य व्यर्थापत्तिरिति वाच्यम् विपरीतमिति सूत्रस्यात्रैव प्रवृत्तेः । विपरीतमिति सूत्रं कैश्चित् सार्वत्रिकमुक्तं

तदपि न दारभाग्यशूलेषु शान्तपदं रिष्फेत्यादिसूत्रेषु धान्तपदं दारभाग्य शूलानन्तरं रिष्फेत्यादिसूत्रं रिष्फेत्यादिसूत्रानन्तरं विपरीतमिति सूत्रं चेत् तदा सार्वत्रिकं स्यात्, अन्यथा प्राग्वदिति सूत्रान्तरमस्य सूत्रस्य प्रणयनात् तत्रैवास्य प्रवृत्तिरिति, यत्तु प्राग्वदिति सूत्रस्य पृथक् करणादप्रतिबन्धेयमर्गला इत्युक्तं तदपि न। एवं चेत् तदा प्राग्वदिति पदं व्यर्थं स्यात्, त्रिकोणेऽर्गला इत्येव सूत्रं प्रणीतं स्यात्, तथा यदि कामस्थेति सूत्रानन्तरं प्राग्वत् त्रिकोणे इति सूत्रं चेत् तदाऽप्रतिबन्धाऽर्गला स्यात् तथा तत्र प्राग्वदिति पदस्य त्रिकोणे प्राग्वत् शुभपापविशिष्टाऽर्गला भवति एवं विधोऽर्थो भवेत्। नन्यूनाविवलाश्चेति सूत्रानन्तरमस्य सूत्रस्य प्रणयनात् कथमपि अप्रतिबन्धार्गला इयं न भवितुमर्हति—इति ॥ ८-९ ॥

द्रष्टा ग्रहसे पञ्चम स्थानमें कोई ग्रह हो तो अर्गलयोग होता है तथा नवममें अल्पसंख्यक एवं दुर्बल ग्रह न हो तो प्रतिबन्धक होता है। परन्तु केतु यदि द्रष्टा हो तो केतुसे नवममें रहनेवाला अर्गला करता है और पञ्चम में रहनेवाला प्रतिबन्धक होता है यह केतुका विलोम नियम इसी सूत्र में लगता है इसी कारण यह सूत्र अलग बनाया गया है। किसीका कहना यह है कि "दार भाग्य शूल" इस सूत्रमें पञ्चम पदबोधक शब्द देदेने से "रिष्फनीचकाम" इस सूत्रमें नवम् पदबोधक शब्द को देदेने से काम चल जाता "प्राग्वत्त्रिकोणे" सूत्र अलग क्यों बनाया गया? इसका उत्तर यह है कि "विपरीतं केतोः" इस सूत्रकी प्रवृत्ति इसी सूत्रमें है। यदि वैसा होता तो उन सब स्थानोंमें केतु कृत व्यत्यय हो जाता। किसीका सन्देह यह है कि केतु कृतव्यत्यय सर्वत्र है सो भी नहीं हो सकता, क्योंकि यदि सर्वत्र होता तो "प्राग्वत्त्रिकोणे" यह सूत्र ही नहीं बनता। किसीका

मत यह है कि त्रिकोण के दोनों स्थानोंमें प्रतिवन्धकहीन अर्गला ही होती है यह भी व्यर्थ है क्योंकि यदि "कामस्था" इस सूत्रके वाद "प्राग्वत्रिकोणे" यह सूत्र होता तो वह अर्थ ठीक समझा जाता ॥ ८-९ ॥

अस्मिन् ग्रन्थे कारकस्यैव प्राधान्यात् कारकाद्विशेषफल लाभाच्चकारकग्रहान् विवक्षुरादावात्मकारकं दर्शयति—

**आत्माधिकः कलादिभिर्नभोगः**
**सप्तानामष्टानां वा ॥ १० ॥**

अथात्र "देहलीदीपक"-न्यायेन विपरीतं केतोरिति सूत्रमनुवर्त्तते । सप्तानां कारकाणां वा अष्टानां कारकाणांविचारे यो नभोगः कलादिभिः कलाशब्दस्याप्यंशवाचकत्वात् अंशादिभिरधिकः स आत्माआत्माकारकः केतोर्विपरीतम् । अत्र केतुशब्दो राहोर्वाचकः । वृद्धवाक्ये भागशब्देनांशपदस्य प्रसिद्धत्वादृषिणा कलादिभिरित्युक्तम् । अर्थाद्यत्र ग्रहाणां ग्रहयोर्वा मध्येंऽशतुल्यता चेत् तदा कलादिस्थानेन योऽधिकः स आत्मकारको भवति इति ज्ञापनार्थं—अत्र ग्रन्थे सप्तानां कारकाणां दर्शनाद्रव्यादिशन्यन्तानां सप्तानां ग्रहाणां मध्ये यो ग्रहोंऽशादिभिरधिकः स आत्मा । अष्टानां वा इति तु मतान्तरेणाष्टमकारकवोधको विकल्पेन राहोर्वोधकश्च । अर्थात् कैश्चिदाचार्यैरष्टौ कारकाः प्रोक्ताः । तेषां मते पितृकारको विशेषः । तत्र राहोरपि ग्रहणम्, अथवा केचिदाचार्या मातृकारकग्रहेणैव पुत्रकारकस्यापि विचारं कुर्वन्ति, ऋषिणाऽप्युक्तम् । "मात्रा सह पुत्रमेके समानन्ति" तत्र षट्कारकस्यैव ग्रहणात् सप्तकारकग्रहणे पुत्र कारकस्थाने पितृकारकं वदन्ति । ऋषेस्तु सप्तकारकग्रहणरूप एवाशयः । अष्टानां वा इत्यनेन अंशन्यूनत्वे आत्मकारकत्वेन

प्रकारान्तरेण कैश्चित् राहुर्गृह्यते इति तु वर्त्तमाना रीतिः । अत्र वृद्धसम्मतिः ।

"भागाधिकः कारकः स्यादल्पभागोन्त्यकारकः ।
मध्यांशो मध्यखेटः स्यादुपखेटः स एव हि" ॥

अस्यार्थः, यो ग्रहो भागाधिकः, अत्र भागशब्दमुपलणम्, अर्थादंशादिभिरधिकः स कारक आत्मकारक इति अल्पभागः सर्वग्रहापेक्षया न्यूनांशः स चान्त्यकारको दारकारकः । मध्यांशो मध्यांशमवलम्ब्यस्थितः कारकादंशन्यूनत्वेन चतुर्थो ग्रहो मध्यखेटो मातृकारकः स एव उपखेटश्च । केचित् तु ग्रहयोर्ग्रहाणां वा यत्र भागादिसाम्यं तत्र यो वली स आत्मा अन्य उपखेट इति वदन्ति तत्र मूलमन्वेष्यम्, मन्मते तु अंशसाम्ये यो वली स आत्मा यस्तु निर्वलः स तदन्यकारक इति । राहोर्न्यूनांशत्वेनात्मकारकत्वं स्यादिति वृद्धेनापि मतान्तरं प्रतिपादितम् ।

"मेषाद्यसव्यमार्गेण राहुकेतू न कारकौ" ।

अस्यायमर्थः—सव्यं वाममपसव्यं दक्षिणं तेन मेषादिक्रममार्गेण राहुकेतु कारकौ न भवतः । विपरीतमार्गेण तु भवत एव, अत्र केतोर्ग्रहणं कार्यान्तरार्थम् राहुकेत्वोरंशादिसाम्येन कारकान्तराभावात् । श्रीमता सुवोधिनीकारेण "अंशपदं विहाय कलादिपदेन निर्देशस्तु अंशसाम्येकलाधिकस्येति ज्ञानार्थम कलादिभिरपि साम्ये वक्ष्यमाणवलेनेकतरनिर्णयः" इत्युक्त्वा पुनः "द्वित्र्यादिग्रहाणामंशादिसाम्येन कारकलोपे वलवत् स्थिरकादेव तत्तद्विचारः कर्त्तव्यः" इत्यादि यदुक्तं तदसङ्गतम् यदा वलविशेषेण कारकनिश्चयो जातस्तदा पुनः स्थिरकथनं न युक्तम् कारकलोपाभावात् । अत्र राशिकृतमाधिक्यं न ग्राह्यम्, भागाधिक इत्युक्तत्वात ॥ १० ॥

भा०—किसी के मत में सात, किसी के मत में आठ कारक होते हैं यदि सात कारक का विचार हुवा तो शनिपर्यन्त सात ही ग्रहों में और आठ कारक बनाना हुवा तो राहुपर्यन्त आठ ग्रहों में जो ग्रह अंशादि में अधिक हों वह आत्मा कारक होता है जैमिनि ऋषि सात ही कारक लिखते हैं। राहु का अंशाधिक्य न्यूनांश से ही होता है क्योंकि पंचाङ्ग में जो राहु लिखने की रीति है उस प्रथा से उसके अंशादि को तीसमे कम कर देने से उसका भुक्तांश होता है। इस सूत्र में कलापद अंश बोधक है। क्योंकि कारिका में ऐसा ही लिखा है।

विशेष विवरण—नीलकण्ठ ने लिखा कि सूर्यादिशनिपर्यन्त सात ग्रहों में अथवा राहुपर्यन्त आठ ग्रहों में जो ग्रह अंशों में अधिक हों वह आत्म कारक होता है यह अर्थ ठीक नहीं है क्योंकि इस अर्थ में यह सन्देह रह जाता है कि किस अवस्था में सात ग्रह में और किस अवस्था में आठ ग्रहों में अंशाधिक्य देखा जाय। और राहु का उल्टा अंशाधिक्य देखा जाय। और "सात कारक या आठ कारक के विचार में" ऐसा अर्थ करने पर अर्थात् यह बात निकल जाती है कि जब सात कारक का विचार हो तो सात ग्रहों में जहाँ आठ कारक का विचार हो वहाँ आठ ग्रहों में अंशाधिक्य देखना। जैमिनी ऋषि सात ही कारक मानते हैं इस कारण से मतान्तर होने के कारण "अष्टानां वा" यह विकल्प बोधक पद दिया गया है।

सात कारक ये हैं—आत्मा १ अमात्य २ भ्राता ३ माता ४ पुत्र ५ ज्ञाति ६ दारा ७ नीलकण्ठ ने "कला या आद्यः अंशाः तैः अंशै" यह लिखा है सो अशुद्ध है, क्योंकि कला, भाग, खण्ड, इत्यादि पद किसी टुकड़े का ही नाम है। कारिका में "भाग" पद दिया है अतः भाग का ही नामान्तर पद "कला" जैमिनी

ऋषि ने सूत्र में रखा है और केवल अंश पद रखने से अंश मात्र के तुल्य हो जाने पर आगे की अपेक्षा बनी ही रहती है इसी कारण नीलकण्ठ ने यह लिखा है कि "कलादि पदेन निर्देशस्तु अंशसाम्ये कलादिकाधिक्ये न विनिर्णेतव्यमिति ज्ञापनार्थम्"। इस कारण इतना द्रविड़ प्राणायाम के बदले पहले ही कलादि का अर्थ अंशादि कर देना लाघव होता है। कारिका के अनुसार सात ही कारक मानने पर चौथा ग्रह मध्यखेट वा उपखेट हो सकता है आठ कारक मानने पर नहीं होता अतः आठ कारक की कल्पना निर्मूल जान पड़ती है। जो ऋषि के समय में भी क्वचित प्रचलित थी। नीलकण्ठ ने पहिले तो लिखा है "कलादिभिरपि साम्ये वक्ष्यमाण बलेनैकतर निर्णयः' इसके बाद लिखते हैं कि द्वित्र्यादि ग्रहाणामंशादिसाम्येन कारकलोपे बलवत्स्थिरकारकादेव तत्तत्कारकविचारः कर्तव्यः। यह बात सर्वथा असंगत है क्योंकि जब पहले दो ग्रहों में अंशादितुल्य हो जाने पर बल के अनुसार कारक ग्रहों का निश्चय हो जायगा तब कारक लोप हो ही नहीं सकता। स्थिर कारक सन्देह की जगह विचार करने के लिए नहीं है किन्तु विशेष प्रकार से विचार करने के लिए है। नीलकण्ठ ने अपनी टीका में एक जगह लिखा है कि "अत्र राशि कृतमाधिक्यं न ग्राह्यमिति सम्प्रदायः" यह भी प्रतारण वाक्य है क्योंकि जब "भागाधिकः" लिख दिया गया तो राशिकर के आधिक्य देखना बिलकुल भूल है—"सम्प्रदायः" लिखने की आवश्यकता नहीं है।

अथात्मकारकस्य किञ्चिद्गुणविशेषं दर्शयति।

**स ईष्टे बन्धमोक्षयोः ॥ ११ ॥**

स आत्मकारको बन्धमोक्षयोरिष्टे स्वामी भवति। अर्थात्

नीचपापयुक्तः कारकः स्वदशासु बन्धनादिदुःखदः स्यात्, उच्चस्थः शुभसंयुक्तः कारकः स्वदशान्तर्दशासु योगान्तराद्-वद्धस्यापि मोक्षकर्त्ता स्यात्। अथवा पूर्वलक्षणयुक्तः कारको नीचकर्मप्रवृत्तिद्वारा संसाररूपबन्धनदः स्यात्। द्वितीयलक्ष-णाक्रान्तः कारको ज्ञानकाशीवासादिभिर्मोक्षकर्त्ता स्यात् इति अत्रबन्धपदं कष्टसूचकं मोक्षपदं च शुभबोधकमिति ॥ ११ ॥

भा०—आत्माकारक यदि अच्छे स्थान में हुवा तो मोक्ष यानी सुख देता है—और नीचादि दुष्ट स्थानमें हुवा तो बन्ध-नादि दुःख कारक होता है ॥ ११ ॥

अथामात्यादिकारकान् दर्शयति।

**तस्यानुसरणादमात्यः ॥ १२ ॥ तस्य भ्राता ॥ १३ ॥ तस्य माता ॥१४॥ तस्य पुत्रः ॥ १५ ॥ तस्य ज्ञातिः ॥ १६ ॥ तस्य दाराश्च ॥ १७ ॥**

तस्यात्मकारकस्यानुसरणात् पश्चाद्गमनादमात्योऽमात्य-कारको भवति। अर्थादात्मकारकान्न्यूनांशो ग्रहोऽमात्यः। एवमेवाग्रेऽपि व्याख्येयम् ॥ १२ ॥ अमात्यकारकान्न्यूनांशो भ्रातृकारकः ॥ १३ ॥ भ्रातृकारकान्न्यूनांशो मातृकारकः ॥१४॥ मातृकारकान्न्यूनांशः पुत्रकारकः ॥ १५ ॥ पुत्रकारकान्न्यूनांशो ज्ञातिकारकः ॥ १६ ॥ ज्ञातिकारकान्न्यूनांशो दारकारकः। चकार स्त्वन्यकारकाभावसूचकः। तथा स्थिरकारकपदोपपदादिभ्यो-ऽपि एतेषां विचारः कार्य इति सूचकश्चेति ॥ १७ ॥

भा०—आत्मा कारकसे जो अल्प अंश हो वह अमात्यकारक उससे जो अल्प अंश वह भ्रातृ कारक इसी प्रकार मातृ-पुत्र-ज्ञाति और दारकारक ग्रह होते हैं। परन्तु इनका विचार स्थिर कारक पद उपपद इत्यादि परसे भी करना चाहिये ॥१२–१७॥

अथ स्वमतं प्रदर्श्यान्यमतं दर्शयति।

**मात्रा सह पुत्रमेके समामनन्ति ॥ १८ ॥**

एके वहव आचार्याः मातृकारकग्रहेणैव पुत्रस्यापि विचारं कुर्वन्ति। त एव मातृपुत्रकारकयोरैक्यात् सप्तमकारकाभावात् पुत्रकारकस्थाने तस्यपिता इति सूत्रं वर्णयन्ति। क्वचित् पुस्तकेषु मातृकारकान्न्यूनांशः पितृकारको भवतीति दृष्टं तदसङ्गतम्। आदौ मातृकारकनिरूपणस्यायोग्यत्वात् ॥ १८ ॥

भा०–किसी के मतमें भ्रातृ कारक और पुत्र कारक दोनों एकही ग्रह होता है तो वहाँ पितृकारक वढ़ जाता है और जिनके मतमें आठकारक होते हैं उनके यहाँ भी पितृकारक बढ़ जाता है। उसका क्रम यह है आत्मा १ अमात्य २ भ्राता ३ माता ४ पिता ५ पुत्र ६ ज्ञाति ७ दारा ८।

अथ स्थिरकारकान् दर्शयति—

**भगिन्यारतः श्यालः कनीयान् जननी च ॥ १९ ॥**

आरतो भौमात् भगिनी श्यालो लघुभ्राता माता च एतेषां विचारः कार्यः ॥ १ ॥

भा०—मंगल से वहिन, साला, छोटाभाई, और माता का विचार करना ॥ १ ॥

मातुलादि कारकमाह—

**मातुलादयो बन्धवो मातृसजातीया इत्युत्तरतः ॥ २० ॥**

उत्तरतो भौमादुत्तरतो वुधात् मातुलादयो वन्धवस्तथा मातृसजातीया मातृष्वसृपितृव्यपत्न्यादयो विचार्याः ॥ २० ॥

भा०—मातुल इत्यादि वन्धु का तथा माता की सजातीया जितनी हों उनका विचार वुध से करना चाहिए ॥ २० ॥

पितामहादिकारकमाह—

**पितामहः पतिपुत्राविति गुरुमुखादेव जानीयात् ॥२१॥**

गुरुमुखाद्गुर्वादिभ्यः क्रमेण पितामहः पतिपुत्रौ इति जानीयात् अर्थात् गुरोः पितामहः शुक्रात् पतिः शनेः पुत्र इति जानीयात्। अग्रिमसूत्रे पतिः पत्नी पितरौ श्वसुरौ मातामहाः"—इत्यादि न च वाच्यम् । शनेः पुत्र इति तृतीयसूत्रनिर्माणापेक्षया तथैव सुवचत्वात् । शेषं शुक्रफलमग्रिमसूत्रे निबद्धम् ॥ २१ ॥

भा०—पितामह का विचार गुरु से पति का शुक्र से और पुत्र का विचार शनि से करना ॥ २१ ॥

**पत्नी पितरौ श्वसुरौ मातामहा इत्यन्तेवासिनः ॥२२॥**

अन्तेवासिनोऽर्थात् गुरोरन्तेवासिनः शुक्रात् पत्न्यादयो विचार्या इति ।

भा०—स्त्री, माता, पिता, श्वश्रू श्वसुर और मातामह इनका विचार शुक्र से करना ।

अथात्र प्रसङ्गादन्येऽपि कारकाः संगृह्य लिख्यन्ते ।

"स्वर्क्षतुङ्गमूलत्रिकोणगाः कण्टकेषु यावन्त आश्रिताः ।
सर्व एव तेऽन्योन्यकारकाः कर्मगस्तु तेषां विशेषतः ॥
कर्कटोदयगतो यथोडुपः स्वोच्चगाः कुजयमार्कसूरयः ।
कारका निगदिताः परस्परं लग्नगस्य सकलोऽम्बराम्बुगः ॥
स्वत्रिकोणोच्चगो हेतुरन्योन्यं यदि कर्मगः ।
सुहृत्तद्गुणसम्पन्नः कारकश्चापि स स्मृतः" ॥

अथात्र 'भगिन्यारत' इत्यादिसूत्राणि प्राचीनैर्दिङ्मात्रेण दर्शितानि ।

"कालात्मा दिनकृन्मनस्तुहिनगुः सत्त्वंकुज ज्ञो वचो
जीवो ज्ञानसुखे सितश्च मदनो दुखं दिनेशात्मजः ।

राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः
सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः ॥
रक्तः श्यामो भास्करो गौर इन्दुर्नात्युच्चाङ्गो रक्तगौरश्च वक्रः ।
दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः ॥
वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिता ।
वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः सूर्यादिनाथाः क्रमात् ।
प्रगाद्या रविशुक्रलोहिततमः सौरेन्दुवित्सूरयः
क्षीणेन्द्वर्क महीसुतार्कतनयाः पापा बुधस्तैर्युतः ॥
बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युवती नराश्च शेषाः ।
शिखिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः क्रमेण ॥
विप्रादितः शुक्रगुरू कुजार्कौ शशी बुधश्चेत्यसितोऽन्त्यजानाम् ।
चन्द्रार्कजीवा ज्ञसितौ कुजार्कौ यथाक्रमं सत्त्वरजस्तमांसि ॥
मधुपिङ्गलदृक् चतुरस्रतनुः पित्तप्रकृतिः सवितात्पकचः ।
तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्च शशी मृदुवाक् शुभदृक् ॥
क्रूरदृक् तरुणमूर्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः ।
श्लिष्टवाक् सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिश्च ॥
बृहत्तनुः पिङ्गलमूर्धजेक्षणो बृहस्पतिः श्रेष्ठमतिः कफात्मकः ।
भृगुः सुखी कान्तवपुः सुलोचनः कफानिलात्मासितवक्रमूर्धजः ॥
मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः
स्थूलद्विजः परुषरोमकचोऽनिलात्मा ।
स्नाय्वस्थ्यसृक्त्वगथ शुक्रवसे च मज्जा
मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः ॥
देवाम्ब्वग्निविहारकोशशयनक्षित्युत्करेशाः क्रमाद्
वस्त्रं स्थूलमभुक्तमग्निकहतं मध्यं दृढंस्फाटितम् ।
ताम्रं स्यान्मणिहेमयुक्तिरजतान्यर्काच्च मुक्तायसी
द्रेष्काणैः शिशिरादयः शशुरुचज्ञग्वादिषूद्यत्सु वा ॥

अयनक्षणवासरर्त्तवो मासोऽर्धं च समाश्च भास्करात्
कटुकलवणतिक्तमिश्रिता मधुराम्लौ च कषाय इत्यपि॥
अन्तःसारान् जनयति रविर्दुर्भगान् सूर्य सूनुः
क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यश्च भौमः।
वागीशज्ञौ सफलविफलान् पुष्पवृक्षांश्च शुक्रः
स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रश्च भूयः॥
शुभोऽशुभर्क्षे रुचिरं कुभूमिजं करोति वृक्षं विपरीतमन्यथा।
परांशके यावति विच्युतः स्वकाद्भवन्ति तुल्यास्तरवस्तथाविधाः
चाण्डालजातिस्त्वथ सैंहिकेयः केतुश्च जात्यन्तरमत्र मान्दिः।
राहोः केतोश्च मान्देश्च सर्वस्थानमुदाहृतम्।
कंथा फणीन्द्रस्य तु चित्ररूपा केतोर्महाच्छिद्रयुक्ता विशेषात्।
राहोस्तु शीशं शिखिनस्तु नीलं धरामणिंतं कथयन्ति तज्ज्ञाः॥
चित्राम्बरं देवगुरोर्भृगोस्तु क्षौमाम्बरं भास्करजेन्द्रगोपम्।
शुक्लं क्षौमं रात्रिनाथस्य चान्द्रेः श्यामं क्षौमं रक्तचित्रं कुजस्य॥
वस्त्रं चित्रं पट्टवस्त्रं शनेस्तु नीलं राहोर्जीर्णचित्रान्वितं च।
रूपान्वितं तद्वसनं च केतोः बलान्वितानां तु वदेद्ग्रहाणाम्॥
भृगोर्वसन्तः क्षितिसूनुभान्वोर्ग्रीष्मः शशाङ्कस्य ऋतुः प्रवर्षा।
विदः शरद्देवगुरोस्तु हैमऋतुः शनेः स्याच्छिशिरस्तु कालः॥
धातुग्रहा राहुशनीन्दुभौमाः मूलग्रहौ शुक्रदिनाधिनाथौ।
जीवग्रहौ जीवशशाङ्कसूनुः संवर्णयन्ति स्फुटमेव शास्त्रे॥
अधुना सम्प्रवक्ष्यामि स्थिराणि कारकाणि च।
सूर्यादीनां ग्रहाणां च वीर्यवान् कारको भवेत्॥
वीर्यवान् जायते विप्र जन्मनि रविशुक्रयोः।
स पितृकारको ज्ञेयो निर्विशङ्कं द्विजोत्तम॥
चान्द्रारयोश्च बलवान्मातृकारक उच्यते।
आर्यरणः पुण्यभे तात इन्दोर्माता च तुर्यतः॥

कुजात् तृतीयतो भ्राता बुधात् तुर्यं च मातुलः ।
देवेज्यात् पञ्चमात् पुत्रो दैत्येज्यात् द्यूनगात् स्त्रियः ॥
शनेरष्टमतो मृत्युरित्थं तातादिकारकाः ।
अधुना संप्रवक्ष्यामि विशेषं भावकारकम् ॥
जनुर्लग्नं च विद्याद्वै आत्मकारकमेव च ।
एकादशे ज्येष्ठभ्राता तृतीये तु कनिष्ठकः ॥
सुते सुतं विजानीयात् तथा सप्तमभावतः ।
सुतस्थाने ग्रहस्तिष्ठेत् सोऽपि कारक उच्यते ॥
सूर्यो गुरुः कुजः सोमो गुरुर्भौमो सितः शनिः ।
गुरुश्चन्द्रसुतो जीवो मन्दश्च भावकारकाः ॥

अस्मद्गुरुचरणास्तु ।

"रविर्जीवो भूजः शशिशशिसुतौ वासवगुरुः
दिनेशापत्यारौ दनुजकुलपूज्यो रविसुतः ।
रवीज्यौ मन्दज्ञार्कसुरगुरवो देवपगुरुः
शनिः प्रोक्ता इत्थं तनुभवनतः कारकखगाः ॥"

अथान्यप्रकारेण कारकाः ।

"मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाधिपः ।
बुधः कन्यामिथुनयोः कर्कस्वामी तु चन्द्रमा ॥
स्यान्मीनधन्विनोर्जीवः शनिर्मकरकुम्भयोः ।
सिंहस्याधिपतिः सूर्यः कथितो गणकोत्तमैः ॥" इति ।

अत्रेदमवधेयम् । लग्नाष्टमयोर्भौमः । द्वितीयसप्तमयोः शुक्रः । तृतीयषष्ठयोर्बुधः । चतुर्थस्य चन्द्रमा नवमद्वादशयोर्जीवः । दशमैकादशयोः शनिः । पञ्चमस्य सूर्यः । एवं ग्रहाः कारका भवन्ति इति ।

अन्यच्च ।

"सूर्यादात्मपितृप्रभावनिरुजाशक्तिः श्रियश्चिन्तये-
च्चेतो बुद्धिनृपप्रसादजननी सम्पत्करश्चन्द्रमाः ।

सत्त्वं रोगगुणानुजावनिसुताज्ज्ञातिर्धरासूनुना
विद्यावन्धुविवेकमातुलसुहृद्वाक्कर्मकृद्बोधनः ॥
प्रज्ञावित्तशरीरपुष्टितनयज्ञानानि वागीश्वरात्
पत्नीवाहनभूषणानि मदनव्यापारसौख्यं भृगोः ।
आयुर्जीवनमृत्युकारणविपत्सम्पत्प्रदाता शनिः
सर्पेणैव पितामहं तु शिखिना मातामहं चिन्तयेत् ॥
द्युमणिरमरमन्त्री भूसुतः सोमसौम्यो
गुरुरिनतनयारौ भार्गवो भानुपुत्रः ।
दिनकरदिविजेज्यौ जीवभानुज्ञमन्दाः
सुरगुरुरिनसूनुः कारकाःस्युर्विलग्नात्"—इति ॥

अथ कारकत्वे द्वित्र्यादिग्रहाणामंशादिसाम्ये कारकयोगादिवलतुल्यत्वे निर्णयार्थं निसर्गवलमाह ।

मन्दोऽज्यायान् ग्रहेषु ॥२३॥

ग्रहेषु रव्यादिसप्तसु ग्रहेषु मन्दः शनिः अज्यायोऽतिदुर्बलः । अत्र क्रमस्तु बृहज्जातके "शकुवुगुशुचराद्या वृद्धितो वीर्यवतः" । अस्यार्थः । सर्वग्रहेभ्यः शनिर्दुर्बलः । तस्माद्बलीभौमः । ततो बुधः । ततो गुरुः । ततः शुक्रः । ततश्चन्द्रः । ततो रविः । अर्थात् सर्वेभ्यो वली रविरित्यर्थः । अस्य प्रयोजनं तु लघुजातके "वलसाम्येऽस्मादधिकचिन्ता"—इति ॥ २३ ॥

शनि सब ग्रहों से हीन वल होता है शनि से वलवान क्रम से, मंगल, बुध, गुरु, शुक्र, चन्द्रमा और सूर्य होते हैं सब प्रकारों से वल तुल्य होने पर इसी से अधिक वलवान् , देखना इसको नैसर्गिक वल कहते हैं ।

अथ वक्ष्यमाणायां चरदशायां नाथान्ताः समाः प्रायेण—इति सूत्रोपदिष्टायां गणनाक्रमस्य विशेषप्रयोजनाद् गणनाक्रमंसूत्राभ्यां दर्शयति ।

प्राचीवृत्तिर्विषमभेषु ॥२४॥

परावृत्योत्तरेषु ॥२५॥

अत्र ग्रन्थे सर्वत्र विषमभेषु मेषमिथुनसिंहतुलाधनुः कुम्भेषु प्राचीवृत्तिः मेषवृषादिरीत्या क्रमगणनास्यात् । उत्तरेषु विषमादुत्तरेषु समराशिषु वृषकर्कटकन्यावृश्चिकमकरमीनेषु परावृत्त्या व्युत्क्रमेण वृषमेषादिरीत्या गणना स्यात् इत्यर्थः ॥ २४-२५ ॥

अत्रापवादमाह ।

न क्वचित् ॥ २६ ॥

क्वचित् चरदशायां त्रिकोणदशायां च विषमराशौ क्रमगणना न स्यात् समराशौ व्युत्क्रमगणना न स्यात् ।

अत्र प्राचीनकारिका ।

"क्रमाद्वृषे वृश्चिके च व्युत्क्रमात् कुम्भसिंहयोः" ।

तेन विषमपदे क्रमगणना समपदे व्युत्क्रमगणना ॥

अतएव सूत्रत्रयफलितार्थः चरत्रिकोणदशयोः श्रीमता नीलकण्ठेनोक्तः ।

"मेषादिभिस्त्रिभिर्ज्ञेयं पदमोजपदे क्रमात् ।

दशाब्दानयने कार्या गणना व्युत्क्रमात् समे" ॥

तत्र प्राचीवृत्तिर्विषमपदे परावृत्त्योत्तरे इति कथं नोक्तम् । तत्रोच्यते अस्मिन् ग्रन्थे विषमसमराशौ क्रमव्युत्क्रमगणना प्रसिद्धा परन्तु त्रिकोणदशायां तथा चरदशायामेव विषमसम पदभेदेनक्रमव्युत्क्रमगणनाया व्यवहार इति सूचनार्थं सूत्रत्रयम् । अन्यथातु सर्वत्रैव पदभेदेन गणना स्यात् ।

भा०—इस ग्रन्थ में सब जगह विषम राशि में क्रम से और सम राशि में उत्क्रमसे गिनती चलती है परन्तु चर दशा और

त्रिकोण दशामे सम होने पर भी वृष और वृश्चिक की क्रमगणना तथा विषम होने पर भी सिंह कुंभ की उत्क्रम से गणना होती है अर्थात् मेषादि तीन तीन राशिका एक एक पद है तो चर दशा तथा त्रिकोण दशा में विषम पद में (मे० वृ० मि० तु० वृ० ध० ) क्रमगणना और समपद (क० सिंह० क० म० कुं० मी० ) मेंउत्क्रमगणना होती है किसी का मत है कि जब तीन तीन राशियों में उपरोक्त गणना हुई "तव प्राचीवृत्तिर्विषम पदे-परावृत्योतरे" ऐसा सूत्र क्यों नहीं बना ? इसका उत्तर यह है कि ऐसा सूत्र बनने पर ग्रन्थ भर के लिए एक ही नियम हो जाता जो कि दो ही दशा विचार के लिए है ॥ २४-२५-२६ ॥

अथ राशीनां चरदशाब्दानयनविधिं दर्शयति—

**नाथान्ताः समाः प्रायेण ॥ २७ ॥**

अत्र राशीनां स्वामिनो ग्रन्थान्तरोक्ता ग्राह्याः ।
तथा च वृहज्जातके ।
"क्षितिजसितज्ञचन्द्ररवि सौम्यसितावनिजा ।
सुरगुरुमन्दसौरिगुरवश्च गृहांशकपाः ॥"–इति

ग्रहाणां स्थानस्यानियतत्वात् तथा पंचमे पदक्रमात्प्राकप्र त्यक्तं चरदशायाम्–इतिसूत्राच्चास्या दशायाश्चरदशा इति नाम बोध्यम्। अत्र समा अब्दा नाथान्ता राशीनां स्वामिपर्यन्ता ग्राह्याः। पूर्वोक्तक्रमव्युत्क्रमगणनानुसारेण यत्र क्रमगणना चेत् तत्र ग्रहमध्ये भावा विशोध्याः । उत्क्रमगणा चेत् तत्र भावमध्ये ग्रहः शोध्यो यदवशिष्टं तत्र राशितुल्यानि वर्षाणि अंशादिभिरनुपातात् मासा-दयश्चानेयाः । अत्र सामान्यतो वर्षानयनप्रकारो वृद्धैरुक्तः ।

तस्मात् तदीशपर्यन्तं संख्यामत्र दशां विदुः ।
वर्षद्वादशकं तत्र न चेदेकं विनिर्दिशेत् ॥

अस्यार्थः । तस्माद्भावात् तदीशपर्यन्तं या संख्या तामत्रदशां विदुःक्रमोत्क्रमगणनया इति शेषः । तत्र नाथेभावतुल्ये वर्षद्वादशकं तत्र न चेत् तदा एकं एकादिक्रमेण विनिर्दिशेत् । प्रायेणेति पदेन प्रथमस्तु क्रमोत्क्रमगणा सूचिता ततः स्वामिन उच्चत्वनीचत्वाभ्यामेकैकवर्षवृद्धिह्रासौ सूचितौ । ततो वृश्चिक कुम्भयोर्द्विनाथत्वं सूचितम् । ततः क्रमोत्क्रमाद् शालेखनप्रकारश्चापि सूचितः ।

अत्र वृद्धवाक्यानि ।

"उच्चखेटस्य सद्भावे वर्षमेकं विनिक्षिपेत् ।
तथैव नीचखेटस्य वर्षमेकं विशोधयेत् ॥"

अस्यार्थः यद्भावस्वामी स्वोच्चगः तद्भावदशायां एकंवर्षयोजनीयम् । यस्य च नीचगः तद्दशायामेकं वर्षं विशोध्यम् । परमत्र विचारः यत्र दशामानं वर्षतोन्यूनं भवेत् तत्रकथं वर्षमानं शुध्येत् अतोनुपातागता मासा एव शोध्या योज्यावेति ।

वृश्चिककुम्भयोर्विशेषः ।

"कुजसौरीकेतुराहू राजानावलिकुम्भयोः ।
कुजसौरी केतुराहू युक्तौ तत्र स्थितौ यदि ॥
वर्षद्वादशकं तत्र न चेदेकं विनिर्दिशेत्" ।

अस्यार्थः । कुजसौरी केतूराहू वृश्चिककुम्भयोः स्वामिनौ अर्थात्वृश्चिकस्य कुजकेतू स्वामिनौ कुम्भस्य शनिराहू स्वामिनौ यदि द्वौ युक्तौ स्वराशौ स्थितौ तत्र वर्षद्वादशकं वृद्धवाक्यप्रमाणाज्ज्ञेयम् । परमत्रापि पूर्वरीत्या येन दशामानमधिकमागच्छेत्तेनैव दशानयनं कार्यं स्वामिनोभावतुल्यत्व एव द्वादशाब्दा इति । नचेत्स्तः भिन्नराशौ यदि भवतः तदा स्वाम्यभाव इवोक्तरीत्या दशानयनं कार्यम् । तत्र तयोर्भिन्नभिन्नराशौ गतत्वे तत्र यो बलवाँस्तत्संख्या ग्राह्या ।

उक्तं च वृद्धैः ।

"द्विनाथक्षेत्रयोरत्र निर्णयः कथ्यतेऽधुना ।
एकः स्वक्षेत्रगोऽन्यस्तु परत्रयदि संस्थितः ॥
तदाऽन्यत्र स्थितं नाथं परिगृह्य दशां नयेत् ।
स्वक्षेत्रे मिलितावेव स्वामिनौनैकराशस्तथा ॥
एकस्य स्वगृहस्थत्वं न हि कार्योपयोगिकम् ।
द्वावप्यन्यर्क्षगौ तौ चेत् सग्रहो वलवान् भवेत् ॥
ग्रहयोगसमानत्वे चिन्त्यं राशिवलाद्वलम् ।
चरस्थिरद्विस्वभावाः क्रमात् स्युर्वलशालिनः ॥
राशिसत्त्वसमानत्वे वहुवर्षो वली भवेत् ।
एकः स्वोच्चगतस्त्वन्यः परत्र यदि संस्थितः ॥
ग्राहयेदुच्चखेटस्थं राशिमन्यं विहाय वै ।
नाथान्ता इति रीत्या यो वहुवर्षवर्ती दशाम् ॥
करोति वहुवर्षोऽसौ स्वराशेर्दूरगः खगः ।
एवं सर्वं समालोच्य जातस्य निधनं वदेत् ॥

ग्रहयोर्वा भावयोर्वलविचारे यदिकश्चिद्ग्रह उच्चस्थः परन्तु न्यायेन निर्वलः अन्यो ग्रह उच्चाद्यधिकारहीनः सग्रहादिरीत्या न्यायेन वलयुतस्तदा राश्योर्वलविचारे उच्चग्रहसंयुक्तराशिर्वलवान् ग्रहयोर्मध्ये उच्चं गतो ग्रहो वलवान् नापरः ।

अन्यच्च विशेषो वृद्धैरुक्तः ।

"न्यासयोर्ग्रहहीनत्वे वैकस्यान्येन संयुतौ ।
ग्राह्यो राशिर्ग्रहाभावस्तत्स्वाम्युच्चं गतो यदि ॥
एकत्र स्वर्क्षगः खेटश्चान्यत्र द्वौ ग्रहौयदि ।
ग्रहद्वययुतिं हित्वा ग्राहयेत्पूर्वभं सुधीः ॥"

राशि बलानयने विशेषः

अग्रहात्सग्रहो ज्यायान् सग्रहेष्वधिकग्रहः ।
साम्ये चरस्थिरद्वन्द्वाः क्रमात्स्युर्बलशालिनः ॥

अत्रापि पूर्ववदेवार्थः। न्यासयोरित्युपलक्षणम्। न्यासयोर्लग्नसप्तमयो राश्योर्बलविचारे एकत्र ग्रहाभावे अन्यत्र यदि स्वेशातिरिक्तोन्यो ग्रहः । तत्र यो राशिर्न्यायेन निर्बलः स एव बलवान् यदा तत्स्वामी स्वर्क्षगः । उच्चराशयस्तु—

"अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः।
दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः

एते उच्चाः साम्प्रतं बहुकालतः प्रसिद्धाः प्रायोयवनैः कथिता एषां स्थाने तत्तत्कालीना ग्रहाणां मन्दोच्चा ग्राह्याः । अत्रास्मद्गुरुवरप्रणीताः श्लोकाः ।

चरदशानयनं नयनन्दनं नहि कृतं मुनिसूत्र मतेन यत् ।
मुनिपुरातनवाङ्निवहानहं समवलोक्य धिया वितनोम्यदः ॥
असमभे गणना क्रमशो मता समगृहे विपरीतविधिर्बुधैः ।
क्रमविधिर्वृषवृश्चिकयोः परं कलशसिंहभयोर्विपरीतता ॥
भवनशोधितभावपतेर्भवेद्यदिह शेषभमब्दमितिक्रमे ।
पतिविशोधितभावविशिष्टभं भवतिचाब्दमितिर्विपरीतके ॥
यमहतान्तरभागमितिस्ततो भवति मासविधिः शरभाजिता ।
इह तदुर्वरितेऽक्षविभाजिते दिनघटीपलमानमुदाहृतम् ॥
ध्वजकुजावलिराशिपतीरितावगुरुनीकलशाधिपती बुधैः ।
अथ तयोश्चरसंज्ञदशाविधाविह वदामि शरन्मुखसाधनम् ॥
अधिपयोर्ग्रहयोगबलेन योऽधिकबलः खगवीर्यसमे ततः ।
चरमुखर्क्षबलेऽपि समे ततोऽधिकशरत्प्रदतो हि जगद्दशा ॥
अलिगृहे क्रमतः शिखिभौमयोरधिकवीर्ययुतः कथितोक्तिभिः ।
तमबलस्व्ययघटे विपरीतया गणनयाऽसुरसौरिजगद्दशा " ॥

अथ दशालेखनक्रमस्तु लग्नान्नवमराशिवशात् । यदि लग्नान्नवमराशिर्विषमे पदे भवेत् तदा लग्नद्वितीयादिरीत्या दशा लेख्या । लग्नान्नवमराशिः समपदे भवेत् तदा लग्नद्वादशरीत्या दशा लेख्या । परन्तु आरम्भावधिः स्वस्वलग्नमेव । उक्तं च "पञ्चमे पदक्रमात् प्राक्प्रत्यक्त्वम्" । अस्यार्थः । पञ्चमे लग्नान्नवमे पदक्रमाद्विषमसमेपदक्रमात् प्राक्त्वं क्रमत्वं प्रत्यक्त्वं व्युत्क्रमत्वं च स्यात् ।

अत्र गुरवः ।

"तनुभान्नवमे समे पदे विपरीतक्रमशो दशालिपिः ।
विषमेऽथ पदे क्रमाद्भवेच्चरसंज्ञस्य दशाविधौ लिपिः" ॥

इत्यलमतिविस्तरेण ॥ २७ ॥

भा०—चरदशा वनाने की विधि है कि प्रत्येक भाव की उसके स्वामी पर्यन्त दशा होती है । पहले ग्रहस्फुट, और भावस्फुट वनाना । लग्न बनाकर उस में एक एक राशि जोड़ने से द्वादश भाव वन जाता है । जिस भाव में विषम पद की राशि हो उस भाव के स्फुट को स्वामी के स्फुट में घटा देना और जिन भावों में सम पद की राशि हो वहाँ स्वामी के स्फुट राश्यादि को भाव के स्फुट राश्यादि में घटा देना शेष राशि तुल्य दशा का वर्ष, और अंशादि को दूना करके पाँच से भाग देना तो महीना इत्यादि आवेगा, इस प्रकार दशा का वर्षादि हर भावों के राशि का वनाना—परन्तु वृश्चिक और कुंभमें विशेष वात यह है कि वृश्चिक का स्वामी मंगल और केतु दो ग्रह होते हैं और कुंभके स्वामी शनि तथा राहु होते हैं । तो इन राशियों की दशा वनाने की विधि यह है कि यदि दोनों स्वामी एक ही साथ उस राशि में हों तो ऐसी हालत में उस राशि की दशा जिससे अधिक आवे उसीसे वनाना । और जव दोनों एकत्र न हों तो जो अलग रहता

है वही स्वामी समझा जाता है उसी से पूर्ववत् दशा बनाना यदि दोनों अलग हों तो दोनों में जो बलवान हो उससे दशा बनाना–बल देखने की रीति यह है कि जो अकेला हो वह दुर्बल जो किसी ग्रह के साथ हो वह बलवान, जो अधिक ग्रहयुक्त हो वह अधिक बलवान इस प्रकार बल तुल्य होने पर जो चर में हो उससे स्थिरवाला बलवान और उससे द्विस्वभाववाला बलवान होता है इस प्रकार तुल्यबल होने पर जिससे अधिक दशा आवे उससे दशा बनाना कोई ग्रह किसी ग्रह के साथ हो और कोई अकेला अपने राशि वा उच्च में हो तो वही बलवान होता है इस प्रकार दशा बनाकर जो ग्रह अपने उच्च में हो उसके अंशादि को दूना करके पाँच का भाग देनेसे मासादि आवेगा उसको वह ग्रह जिन जिन राशियों का स्वामी हो उन राशियों की दशा में जोड़ देना इसी प्रकार जिस राशि का स्वामी नीच में हो उसकी दशा में उसके अंशादि को दूना करके पाँच का भाग देनेसे जो मासादिक आवेगा, उसको घटा देना तो दशा स्पष्ट हो जायगी इस प्रकार बारहो राशि की दशा बनाकरके दशा लिखने का क्रम यह है कि लग्न का नवमराशि विषम पदमें हो तो लग्नादि क्रमसे, और सम पदमें हो तो लग्नादि, उत्क्रम से बारहो राशि की दशा लिखकर जन्मकालिक संवत् और सूर्य जोड़ कर दशा ठीक कर लेना। दशा बनाने में स्वामी का स्फुट भाव तुल्य हो तो दशा का मान बारह वर्ष जानना। द्विनाथ क्षेत्रों के स्वामियों के उस अपने राशि में रहने पर भी यदि किसी का स्फुट भाव के तुल्य हो तभी बारह वर्ष दशा जानना अन्यथा दशा बनाने की रीति से जिससे अधिक दशा का मान निकलता हो उसी से बनाना ॥ २७ ॥

अथ पदमित्यादिसूत्रेणाग्रे विशेषफलं विवक्षुरादौ पदमारूढापरपर्यायमुपदिशति ।

## यावदीशाश्रयं पदमृक्षाणाम् ॥२८॥

ऋक्षाणां राशीनां यावदीशाश्रयं पदम्। अर्थात् विचाराश्रयीभूतराशेस्तदीशपर्यन्तं या संख्या तामीशादग्रे संगण्य सा यस्मिन् राशौ समाप्ता स राशिर्विचाराश्रयीभूतराशेःपदम्। ईशादग्रे संगण्य इत्यर्थः कथम्। यावाँश्चासावीशश्च यावदीशः यावदीश आश्रयो यस्य तद्यावदीशाश्रयं पदमिति समासाल्लब्ध इति।

एतदेव वृद्धेनाप्युक्तम्।

"लग्नाद्यावत्तिथेस्तिष्ठेद्राशौ लग्नेश्वरः क्रमात्।
ततस्तावत्तिथं राशिं लग्नारूढं प्रचक्षते" ॥

श्रीमता नीकण्ठेन स्वकृतटीकायामग्रिमसूत्रद्वयस्योपरि-स्वार्थस्य दृढ़ीकरणार्थम्।

"लग्नाल्लग्नपतिर्यावद्राशिसंस्थस्ततः पुनः।
तावानृषिभिरारूढः कथितः सर्वशास्त्रतः ॥
यदा लग्नाधिपो लग्ने सप्तमे वा स्थितो यदि।
आरूढंलग्नमेवात्र निर्दिशेत् कालवित्तमः" ॥

इति श्लोकद्वयं स्वकल्पितं विन्यस्तमिति तत्सूत्रद्वयपरामर्शात् प्रत्यक्षम् ॥ २८ ॥

अत्रापवादरूपं सूत्रद्वयमाह।

## स्वस्थे दारा ॥२९॥ सुतस्थे जन्म ॥३०॥

स्वस्थे लग्नाच्चतुर्थस्थे लग्नस्वामिनि दाराः चतुर्थस्थो राशिर्लग्नस्य पदम्। तथा सुतस्थे लग्नात् सप्तमस्थे लग्नस्वामिनि लग्नात् जन्मेति शब्देन दशमो राशिर्लग्नस्य पदम्। यत् तु श्रीमता सुबोधिनीकारेण स्वकृतटीकायामुदाहरणरूपं सूत्रद्वयमङ्गीकृत्य पूर्वपरिभाषया स्वस्थे ग्रहे दाराः सप्तमो राशिः पदम्। सप्तमस्थे ग्रहे जन्मलग्नं पदमिति लिखितं तदसङ्गतम्।

यतः सूत्रग्रन्थे उदाहरणासंभवः—तथा एकस्मिन्नेव सूत्रे प्रथमपद-मङ्कक्रमेण भावबोधकं द्वितीयपदं संख्याक्रमेण भावबोधकमिति महद्वैषम्यम् । अत्र ऋषेर्मनसि इत्थं शङ्काजाता यत् पूर्वसूत्रानु-सारेण दारा इति पदस्य सप्तमरूपं जन्म इति पदस्य जन्मलग्न रूपमर्थं जनाः करिष्यन्ति अत एवास्यैवाग्रे "सर्वत्र सवर्णाभावा-राशयश्च"—इति सूत्रं स्वप्रतिज्ञानुरूपं निबद्धम् । श्रीमता सुबो-धिनीकारेणापि "दारभाग्यशूलस्थार्गला"—इति सूत्रटीकाया-मत्राक्षरैरेव राशिभावबोधनं मुनेरभिप्रेतमित्यनुपदमेव स्फुटीभ-विष्यति" तथा "ऽस्मिन् ग्रन्थे कटपयादिक्रमेणाङ्का ग्राह्या"-इति स्वीकृतम् तथाऽग्रिमसूत्रस्यापि पूर्वटीकायामुल्लिखितम् । "अ-थास्मिन् शास्त्रे भावराशिबोधकपदानामन्यशास्त्रतो वैलक्षण्यमा-शंक्याह" इति तेन सर्वथा तदर्थं विपरीतमेवेति विभावनीयम् ।

तथाऽस्मद्गुरुचरणाः ।

"ग्रहे भावशुद्धेऽवशिष्टंतु योज्यं ग्रहे स्पष्टमारूढसंज्ञं भवेत् तत् ।
सुखस्थे सुखं द्यूनभे कर्मभं च सुसूक्ष्मं पदंजैमिनीये निरुक्तम्"

तस्माद्यस्माद्भावात् तत् स्वामी चतुर्थगस्तदा तत्स्वामिनस्तु-ल्यमेवपदम् । यदा तत्स्वामी सप्तमगस्तदा तस्मिन् स्वामिनि राशित्रयं युक्तं कर्त्तव्यं तदा पदं भवति । एवमत्र यथा "नाथा-न्ताः समाः"-इति रीत्या चरदशायानयनं क्रियते "वर्ण दान्ताः समाः"-इत्यनेन यथा वर्णददशानयनं क्रियते तथैव यदि "पदान्ताः समाः"-इति रीत्या पददशानयनं भवेत् तदा न काऽपि हानिरिति । तथाचेदं कुत्रचित् व्यवहारेऽपि दृश्यते इति । अथ "यत् तु आद्यैः स्वस्थे दारा विचारणीयाः । सुतस्थे भ्रातृजन्म विचार्यमित्युक्तं तदसङ्गतमेव प्रतिभाति-इति सुबो-धिन्यां यल्लिखितं तन्न समीचीनम् । पूर्वेषामयं तात्पर्यम् । स्वस्थे दाराः स्वादात्मकारकात्स्थे सप्तमे इति स्वस्थे अर्थादात्म-

३

कारकात् सप्तमे स्त्रीविचारः कर्त्तव्यः अथवा स्वस्थे द्वितीये स्त्रीविचारः कर्त्तव्यः । सुतस्थे जन्म इत्यत्र सुते तिष्ठतीति सुतस्थ इति विग्रहो न कार्यः । सुतस्थइत्याकारकं शब्दस्वरूपं भाववोचकं स्वीकरणीयम् । तेन स्वपदानुवृत्तेः स्वादात्मकारात्सुतस्थे एकादशे भ्रातृजन्मविचारोऽर्थाज्ज्येष्ठभ्रातृजन्मविचारः कर्त्तव्यः । उक्तं च—"एकादशादग्रजं तु तृतीयात् तु यवीयसम्"—इति॥२९-३०॥

भा०—इस ग्रंथ में एक वस्तु का नाम पद है। पदका दूसरा नाम आरूढ़ है। पद बनाने की विधि यह है कि भाव से भावेश तक गिनना जितनी संख्या हो उतना फिर भावेश से आगे गिनना तो जो राशि होगी वही उस भाव का पद होगा। उसकी स्पष्ट रीति यह है कि भाव को भावेश में घटा कर शेष को भावेश में जोड़ देना तो पद होगा। इसमें विशेष बात यह है कि जिस भाव का स्वामी जिस भाव से चतुर्थ में हो तो स्वामी तुल्य ही पद होता है और जिस का स्वामी अपने भाव से सप्तम में हो तो उसमें तीन राशि जोड़ देने से पद होता है। यानी उस भाव का दशम राशि पद होता है परन्तु इन दो सूत्रों का अर्थ नीलकण्ठी टीकाकार को मालूम नहीं था। इस कारण उन्होंने इन दो सूत्रों को पूर्व सूत्र का उदाहरण मान कर ऐसा अर्थ लिखा है कि यदि लग्नेश चतुर्थ में हो तो पूर्व नियमानुसार सप्तम राशि लग्न का पद होता है और यदि लग्नेश सप्तम में हो तो जन्म लग्न पद होता है। पर यह अर्थ अशुद्ध है। इस अर्थ को ठीक बनाने के लिए नीलकण्ठ ने पहले सूत्र की टीका में ऋषियों के नाम पर दो श्लोक अपना बना कर लिख दिया है। इस अर्थ का खण्डन इस प्रकार से होता है कि ऋषियों के सूत्रके ग्रन्थों में उदाहरण नहीं होता। पाणिनि भगवान ने अष्टाध्यायी

वनायी परन्तु उदाहरण एक भी नहीं दिया—और पद की अपेक्षा चरदशा वर्णदाददिशा आयुर्दाय इत्यादि वस्तु कठिन है परन्तु किसी का उदाहरण सूत्र में नहीं है—तो इसके लिए उदाहरण की आवश्यकता नहीं है। दूसरी वात यह है कि इस ग्रन्थ में अक्षरों से भाव या राशि का वोध होता है। यह वात इस सूत्र के अगले सूत्र में लिखी है—और यहाँ दार पद कर के प्रसिद्ध पद गणना के अनुसार सप्तम अर्थ किया गया है तथा जन्म शब्द का अर्थ जन्म लग्न किया गया है यह वात अनर्गल है। तीसरी वात यह है कि एक सूत्र में एक ही रीति होती है दो रीति नहीं। नीलकण्ठ ने स्वशब्द का अर्थ अक्षरवश चतुर्थ किया है और दारा का अर्थ प्रसिद्ध ग्रन्थान्तरोक्त नियम के अनुसार सप्तम किया है तथा दूसरे सूत्र में सुतस्थे का अर्थ अक्षर वश सप्तम और जन्म का अर्थ प्रसिद्ध रीति के अनुसार जन्म लग्न किया है। यह भी विचित्र वात है इससे यह साफ है कि नीलकण्ठ ने इन दो सूत्रों के अर्थ में भारी भूल की है। इन दो सूत्रों का अर्थ नीलकण्ठ के पहले के टीकाकारों ने दूसरा ही किया है। वह अर्थ भी किसी हालत में ठीक समझने योग्य है परन्तु उस अर्थ का भी वोध नीलकण्ठ को नहीं हुआ इस कारण अपनी टीका में प्राचीनों के अर्थ को असंगत लिख दिया है। प्राचीनों का अर्थ पहले सूत्र का यह है कि "स्वस्थे दारा विचारणीया" आत्मकारक के सप्तम से या लग्न के द्वितीय से स्त्री का विचार करना दूसरे सूत्र का अर्थ लिखा है "सुतस्थे भ्रातृ जन्म विचार्यम्" सुतस्थे का अर्थ एकादश है ( स=भा७, त=६, थ=७=७६७ इसमें वारह का भाग देने से शेष ११ ) भाव यह कि एकादश से वड़े भाई का विचार करना, कारिका में भी यह वात लिखी है परन्तु नीलकण्ठ ने इन वातों को न समझ कर

इस अर्थ को असंगत लिख दिया है । इस प्रकार बारहों भाव का पद बनाना चाहिये । कोई कोई जैसे "नाथान्ताः समाः" इस विधि से चरदशा बनती हैं उसी प्रकार "पदान्ताः समाः" ऐसी कल्पना कर के पददशा बनाते हैं । यहाँ विषम राशि में क्रम और सम राशि में उत्क्रम गणना जानना, पद बनाने में क्रम वा उत्क्रम दोनों से एक ही बात निकलती है ॥ २८-२९-३० ॥

अथात्र स्वस्थे दाराः सुतस्थे जन्म क्रिये पितरि विशेषेणेत्यादि सूत्रेषु संदेहस्थाने केन प्रकारेण भाव संख्या ग्राह्या इति संशयं परिहरन्नाह ।

## सर्वत्र सवर्णा भावा राशयश्च ॥ ३१ ॥

अस्मिन् ग्रन्थे सर्वत्र भावा राशयश्च सवर्णा एकादिसंख्याबोधकाक्षरगम्याः । चकारात् भावा राशयश्चसवर्णा वर्णदेन सहिता वर्णदराशिना सहिता वर्णददशा सहिताश्च भवन्ति इत्यर्थः । तत्र वर्णदानयनं द्विविधम् राशिवर्णदानयनं भाववर्णदानयनं च तत्र राशि वर्णदानयनप्रकारस्तु वृद्धैरुक्तः—

"ओजलग्नप्रसूतानां मेषादेर्गणयेत्क्रमात् ।
युग्मलग्नप्रसूतानां मीनादेरपसव्यतः ॥
मेषमीनादितो जन्मलग्नान्तं गणयेत्सुधीः ।
तथैव होरालग्नान्तं गणयित्वा ततः परम् ॥
पुंस्त्वेन स्त्रीतया वैते सजातीये उभे यदि ।
तर्हि संख्ये योजयीत वैजात्ये तु विशोधयेत् ॥
मेषमीनादितः पश्चाद्योराशिः स तु वर्णदः ॥

अस्यार्थः । विषमलग्नं चेत् तदा तथैव स्थाप्यम् समलग्नं चेत् तदा मीनादिरीत्या गणनीयमर्थात् स्पष्टलग्नराश्यादिकं द्वादशमध्ये शोध्यम् । एवं जन्मलग्नान्तं तथा होरालग्नपर्यन्तं च

गणयित्वा ते यदि विषमत्वेन समत्वेन वा सजातीये तदा ते योजनीये। यदा च विजातीयेस्तस्तदाऽधिकमध्ये न्यूनः शोध्यः एवं कृते यदि विषमराशिश्चेत् तदा स एव वर्णदराशिर्भवति यदि समराशिर्भवेत् तदा द्वादशमध्ये शोध्यस्तदा वर्णदराशिः स्यात् परन्तु आचार्येण कथमेवं कृतमिति न विद्मः यतो जन्मलग्नं होरालग्नं चेत्युभे सजातीये वा विजातीये स्यातां तयोर्योगो यदि विषमस्तदा स एव वर्णदराशिः। यदा समस्तदा द्वादशमध्ये शोध्यस्तदा वर्णदराशिर्भवतीति, यतो यद्युभे विषमे तदा सूत्रतः वर्णद=ल+हो (१) यद्युभे समे तदा व=१२-ल+१२-हो=२४-[ल+हो] विजातीये तदा व=ल-(१२-हो)=ल+हो-१२ (३) अथवा व=हो-(१२-ल)=१२-[हो+ल] (४) अत्र प्रकार चतुष्टयेऽपि जन्मलग्नहोरालग्नयोर्योगः स्फुटं दृश्यते।

अत्रोदाहरणं यथा—लग्नम् ५।३।८।२। होरालग्नम् ३।४।८।२। अत्र द्वौ द्वादशमध्ये शोधितौजातौ। लग्नम् ६।२६।५१।५८। होरालग्नम् ८।२५।५१।५८। द्वयोर्योगो ३।२२।४३।५६। समत्वाद्द्वादशमध्ये संशोध्य वर्णदः ८।७।१६।४। अथवा यथा स्थितयोस्तयोर्योगः ८।७।१६।४। अयमेव वर्णदः। जन्मलग्नम् २।८।७।६। होरालग्नम् ८।७।६।५। वर्णदराशिः १०।१५।१२।११। जन्मलग्नम् २।८।७।६ होरालग्नम् ७।२५।६।९ अत्रजन्मलग्नानुसारेण होरालग्नं चक्राच्छोधितम् ४।४।५३।५१ अत्र विजातीयत्वाद्द्वयोरन्तरम् १।२६।४६।४५। इदं चक्राच्छुद्धम् ततो वर्णदराशिः १०।३।१३।१५। अथवा द्वयोर्लग्नहोरालग्नयोर्योगः १०।३।१३।१५ अयमेव वर्णदराशिः एतेनपूर्वोक्ताःश्लोकाः केनचितगणितानभिज्ञकृताइत्यनुमीयते॥ अथ होरालग्नजन्मलग्नयोर्मध्ये यद्बली तस्माद्यथा "नाथान्ताः समाः"—इति रीत्या चरदशाऽऽ नीता तथैव "वर्णदान्ताः समाः"—इति रीत्या वर्णददशा आनेयाः। उक्तंच

होरालग्नभयोर्नैयादुर्बलाद्वर्णदादशा । यत्संख्यो वर्णदोलग्नात् तत्संख्याकक्रमेणतु ॥ क्रमव्युत्क्रमभेदेन दशास्यात्पुरुषस्त्रियोः ॥१॥ इति । चरदशा पददशा वर्णददशा इत्यादिपदार्थानामुदाहरणमग्रे वक्ष्यामः। अत्र दशानयने पदक्रमेण क्रमव्युत्क्रमौ न ग्राह्यौ। विषमसमराशिवशात् क्रमव्युत्क्रमगणना कार्या। "ओजलग्नप्रसूतानाम्"—इत्युक्तत्वात्। वर्णददशानयनं सूत्राक्षरार्थान्नायातीति नच वाच्यम्। "सिद्धमन्यत्" इति वक्ष्यमाणत्वादत्र नोक्तंप्राचीनैः संगृहीतम्। अत्र धनभावादीनामपि अनयैवरीत्या वर्णदराशयो भवन्ति। तत्र धनभावादीनां होरालग्नस्यायं क्रमः। लग्नस्य होरालग्नमध्ये एकैकराशिवृद्ध्या धनभावादीनां होरालग्नानि भवन्ति एवमेव भावलग्नानयनेऽपि। लग्नस्य भावलग्नमध्ये एकैकराशियोगेन धनभावादीनां भावलग्नानि भवन्ति। गुलिकलग्नस्य द्वादशभावास्तु प्रसिद्धा एव। श्रीमता नीलकण्ठेनाप्ययमेवार्थोऽङ्गीकृतः। यथा "पूर्वोक्तरीत्या धनभावादि तत्तद्भावान्तं गणनां विधाय पूर्ववत्करणेन तत्तद्भाववर्णदराशयो भवन्तीति सर्वत्रेतिपदेन सूचितम्—"इति। अथ भाववर्णदानयनम्। यथा वर्णदराशिर्लग्नौजत्वयुग्मत्वभेदेन जन्मलग्नहोरालग्नसंख्यावशातः समानीतस्तथैव भावलग्नं जन्मलग्नं विभाव्य गुलिकलग्नं होरालग्नसमं च मत्वा पूर्ववत्करणेन यो लभ्यते स भाववर्णदराशिरिति बोध्यम्। ततो भावलग्नगुलिकलग्नयोर्मध्ये यो राशिर्बली तस्मात् स्वस्वभाववर्णदसंख्यावशातो भाववर्णददशा समानेया। तत्र दशालेखनक्रमस्तु जन्मलग्ने विषमे लग्नात् क्रमतः जन्मलग्ने समेलग्नाद्द्वादशादि व्युत्क्रमतो दशा लेख्या।

"जन्मलग्नंसमं तर्हि सम्मुखं तस्य चादिभम्"—इत्युक्तत्वात् भावलग्नहोरालग्नानयनम्।

"सूर्योदयं समारभ्य घटिकानां तु पञ्चकम्।
प्रयाति जन्मपर्यन्तं भावलग्नं तथैव च॥
तथा सार्धद्विघटिकामितात् कालाद्विलग्नभात्।
प्रयाति लग्नं तन्नाम होरालग्नं प्रचक्षते॥"

भावलग्नानयनेऽनुपातः। यदि पञ्चघटीभिस्त्रिंशदंशा लभ्यन्ते तदेष्टघटीभिः क इति रीत्या फलमानीय यदागतं तल्लग्ने योज्यं भावलग्नं भवति। एवमेव होरालग्नानयने सार्धद्विघटीभ्यांचेत् त्रिंशदंशा लभ्यन्ते तर्हीष्टघटीभिः क इति त्रैराशिकेन यल्लभ्यते तल्लग्नमध्ये योजनीयं तदा होरालग्नं भवतीति श्रीनीलकण्ठमतम्। यत उक्तम् "भावलग्नं होरालग्नं च जन्मलग्नाद्गणनीयम्"—इति। जन्मलग्ने विषमे सूर्यराशितः समे जन्मलग्नाद्धोरालग्नं भावलग्नं च गणनीयमिति प्राचीनाः। अयमेवाभिप्रायो वृद्धेनापि प्रतिपादितः परन्तु नीलकण्ठेनोक्तम् "कारिकातोऽयमर्थो नायाति" इति सम्यग्विरुद्धम्। यतो या पूर्वकारिका सातु श्रीमता नीलकण्ठेन त्यक्ता।

तथा च वृद्धवाक्यम्।

सूर्योदयात् समारभ्य कलापञ्चप्रमाणतः।
जन्मेष्टकालपर्यन्तं गणनीयं प्रयत्नतः॥
ओजराशौ यदा लग्नं सूर्यराश्यनुसारतः।
समलग्ने जन्मलग्नाद्यत्संख्या प्राप्यते द्विज॥
भावलग्नं विजानीयाद्धोरालग्नं तदुच्यते।
तथा सार्धद्विघटिकामितात् कालाद्विलग्नभात्॥
प्रयाति लग्नं तन्नाम होरालग्नं द्विजोत्तम।
यज्जन्म विषमर्क्षेषु सूर्यादि गणयेत् क्रमात्॥
समलग्ने यदा जन्म गणयेज्जन्मभाद्विज।

अस्माकमेवं मतम्। भावलग्नं होरालग्नं घटिकालग्नं च

सूर्यादेव गणनीयम्। यतः सर्वेषामेव लग्नानां सूर्यादेव प्रवृत्तिः। सूर्योदये सर्वाण्येव जन्मलग्नभावलग्नहोरालग्नघटिकालग्नानि समानि। तदग्रे स्वस्वोदयमानानुसारेण सर्वाणि पृथग्रूपाणि भवन्ति। जन्मलग्नं स्वदेशोदयानुसारेण भावलग्नं पञ्चघटीमितोदयमानानुसारेण होरालग्नं सार्धद्विघटीमितमानानुसारेण घटिकालग्नं घटिकामितोदयप्रमाणानुसारेणेति। तथा पद्धत्युत्यं भावसाधनमप्यत्रविडंबनामात्रम्। सर्वत्र भावसाधने स्वस्वलग्नमध्ये एकैकराशियोगेनैव धनभावादयोभावा भवन्तीति सत्सम्प्रदायः अतएव स्वामिनापि "सर्वेभावालग्नसमाः" इति निर्णीतम्।

"होरालग्नादिमांशे तु पूर्णमन्ते न किञ्चन" इति।

वृद्धवाक्याद्धोरालग्नादिकं चापि सावयवमानेयमिति। अत्र मन्मतमेव मुख्यमिति नास्माकमाग्रहः केवला सद्युक्तिरेव मया प्रदर्शिता (अत्रविशेष ज्ञानार्थमदीयं फलितविकासनामकं पुस्तकं समवलोक्यम्)। निर्गलितार्थस्तु—"जन्मेष्टकालंद्विगुणं पञ्चभिर्भागमाहरेत्। लब्धं राश्यादिकं योज्यंरवौ होरातनुर्भवेत्॥ जन्महोराङ्गयोर्योगो विषमो वर्णदोभवेत्। समस्तु भगणाच्छुद्धो वर्णदाख्यः स्फुटोभवेत्॥ वर्णदान्ताः समाः ज्ञेया लग्नहोराङ्गयोर्वलात्' ॥ क्रमव्युत्क्रमभेदेने राशावोजे तथासमे। विषमे क्रमतो लग्नात् समेलेख्या विलोमतः।

अथ वर्णदराशितः फलम्।

"पापदृष्टिः पापयोगो वर्णदस्य त्रिकोणके।
यदि स्यात् तर्हि तद्राशिपर्यन्तं तस्य जीवनम्॥
रुद्रशूले यथैवायुर्मरणादि निरूप्यते।
तथैव वर्णदस्यापि त्रिकोणे पापसङ्गमे॥
वर्णदात् सप्तमाद्राशेः कलत्रादि विचिन्तयेत्।
एकादशादग्रजं तु तृतीयात्तु यवीयसम्॥

पञ्चमे तनुजं विन्द्यान्मातरं तुर्यपञ्चमे।
पितुस्तु नवमान्मातुः पञ्चमाद्वर्णदस्य तु।
शूलराशिदशायां वै प्रवलायामरिष्टकम्॥"

स्वस्ववर्णदराशेः प्रवालायां शूलदशायामरिष्टं पित्रादेर्ज्ञानीया दित्यलमतिविस्तरेण॥ ३१॥

भा०—इस पुस्तक में भाव, लग्नादि, और मेषादि राशि, इनको अक्षरोंही के क्रमसे जानना जैसा कि चौथे सूत्र की टीका में लिखा है। प्रसिद्ध लग्नादिक और मेषादि पदों करके नहीं जानना। अन्य ग्रन्थों में वर्णददशा लिखी है सवर्ण पद के कारण इसी सूत्र पर प्राचीनों ने उसका संग्रह किया है। इष्ट-काल को दूना करके पांच का भाग देनेसे राश्यादि लब्धि होगी उसको स्पष्ट सूर्य में जोड़ देनेसे उसे होरा लग्न कहते हैं, इसमें एक एक राशि जोड़ने से इसका द्वादश भाव वनता है। जन्म लग्न होरा लग्न का योग यदि विषम हो तो उसको वर्णदराशि कहते हैं यदि योग सम हो तो उसे वारह राशि में घटा देना शेष राश्यादि का नाम वर्णद है। वर्णद विषम राशि ही होता है। इस प्रकार लग्नादि छ भावों का जो वर्णद होगा वही सप्तमादि छ भावों का भी होता है। जन्मलग्न होरालग्नमें जो वलवान् हो—वह यदि विषम हो तो उसको वर्णद में घटा देना सम हो तो उसी में वर्णद को घटा देना। शेष राशि तुल्य वर्ष होगा। अंशादि पर से पूर्ववत् मासादिक ले आना इसी को वर्णददशा कहते हैं। इसपर वारहो राशि की दशा वना कर जन्मलग्न विषम हो तो लग्नादि क्रमसे, सम हो तो लग्नादि द्वितीयान्तव्युत्क्रमसे दशा लिख कर जन्म संवत् और सूर्य के राश्यादि को जोड़ कर दशा को ठीक करके लिखना चाहिये इसको राशि वर्णद दशा कहते हैं। इष्ट काल में पांच का भाग

देनेसे राश्यादिलब्ध होगी उसको इष्ट कालिक स्पष्ट सूर्य में जोड़ देनेसे भाव लग्न होता है। उसका द्वादश भाव पूर्ववत् वनाना। गुलिकलग्न जिसके वनाने का प्रकार आगे दिया गया है। उसका भी द्वादश भाव वनाना। भा ग्न के द्वादश भाव को लग्नादि द्वादश भाव और गुलिकल के द्वादश भाव को होरालग्न का द्वादश भाव कल्पनाकर भाव वर्णदराशि और भाव वर्णदशा पूर्ववत् वनाना। वर्णदराशि को लग्न कल्पना करके जैसे लग्नादि द्वादश भावों से फल का विचार किया जाता है वैसे ही सव वस्तु का विचार करना। अपने अपने वर्णदसे त्रिकोण राशियों में जिसमें पाप योग पापदृष्टि अधिक हो उसकी दशा में प्रवल अरिष्ट जानना।

पहले के आचार्यों की वर्णद वनाने की रीति यह है कि जन्म लग्न और होरालग्न दोनों विषम हों तो उनको यथावत् रखना और सम हों तो अलग अलग वारह राशि में घटा कर रखना। इसके वाद यदि दोनों विषम या सम राशि के वश सजाती हों तो दोनों को जोड़ देना और विजाती अर्थात् एक विषम दूसरा सम हो तो अन्तर करना। योग या अन्तर करने के वाद यदि योग या अन्तर विषम राशि हो तो वही वर्णद होता है और सम हो जाय तो उसको वारह राशि में घटा देने से शेष वर्णद राशि होता है-परन्तु लग्न और होरालग्न विषम हो वा सम हो या विषम सम हो जैसा पहले लिखा है दोनों का योग ही विषम होनेसे वर्णद होता है, योग सम हो तो उस को वारह राशि में घटा देनेसे वर्णद हो जाता है इसका कारण संस्कृत टीका में दिखला दिया गया है। इससे यह वात निकलती है कि "ओजलग्न प्रसूतानां" इत्यादि श्लोक किसी गणित के अनभिज्ञ ने वनाया है। भावलग्न तथा होरालग्न

बनाने के विषय में कुछ लोगों का मत है कि यदि जन्मलग्न विषम हो तो होरा लग्नादि के क्षेपक को सूर्य में जोड़ना और जन्मलग्न सम हो तो क्षेपक को लग्न में जोड़ना तो होरालग्नादिक वस्तु बन जायगी—परन्तु किसी भी अवस्था में हो क्रम एक ही रहता है। अर्थात् मेष राशि के बाद वृष उसके बाद मिथुन इत्यादि यही क्रम सर्वत्र होता है। मेष लग्नके बाद सिंह और उसके बाद मकर लग्न नहीं होता। परन्तु सूर्य और लग्न में योग करनेके कारण होरालग्नादि की ऐसी ही विचित्र संस्था हो जाती है। विशेष विवरण जानने के लिए हमारी बनाई फलित विकास नाम की पुस्तक को देखिए। सूर्योदय समय में लग्न, होरालग्न, भावलग्न, घटिकालग्न, ये सब सूर्यके बराबर ही होते हैं उसके बाद जैसे जैसे इष्टकाल बढ़ता है अपने अपने उदय मान के वश यह भी बढ़ते जाते हैं। अतः होरालग्नादि के क्षेपकों को सर्वदा सूर्य में जोड़ देना ही उचित है। यही मत सब गणितज्ञ ज्योतिर्वेत्ताओं का है ॥ ३१ ॥

अथात्र विशेषमाह ।

## न ग्रहाः ॥ ३२ ॥

ग्रहाः सवर्णा न भवन्ति अर्थादेकादिसंख्याबोधकाक्षरगम्या न भवन्ति प्रथमपक्षे। द्वितीयपक्षे ग्रहाणां वर्णदराशयो न भवन्ति इति ॥ ३२ ॥

भा०—ग्रह अक्षरों के वश नहीं जाने जाते और ग्रहों की वर्णददशा नहीं बनती ॥ ३२ ॥

अथान्तर्दशाप्रकारं दर्शयति

## यावद्विवेकमावृत्तिर्भानाम् ॥ ३३ ॥

भानां राशीनां विवेकं यावदावृत्तिर्भवति। विवेकपदबोध्या

चतुश्चत्वारिंशदधिकशतसंख्या भवति । अर्थात् प्रतिराशिषु ये दशाब्दाश्चरस्थिरनवांशदशादिषु सिद्धास्तेषां द्वादशभागेन द्वादशराशीनामावृत्तिरर्थादन्तर्दशा भवतीति एवमेव वृद्धैरुक्तम् ।

"कृत्वार्कधा राशिदशां राशेर्भुक्तिं क्रमाद्वदेत्"

"एवं दशान्तर्दशादि कृत्वा तेन फलं वदेत्"

यत् तु श्रीमता नीलकण्ठेन स्वकृतटीकायां "यत् तु उपस्थित तया दशारम्भावधिः स्वस्वलग्नमेवेति पन्थैरुक्तं तन्न" । "होरालग्नभयोर्नेयाऽदुर्बलाद्वर्णदा दशा"–इतिकारिकोक्तत्वात् ॥

इत्युक्तं तन्न समीचीनम् । यतः केवलवर्षानयने-एव सा रीतिः । तया रीत्या यद्वर्षादिरायाति सा लग्नस्य दशा तथा द्वितीयभावस्य दशा न तु होरालग्नादीनाम् । तथा कल्पने द्विवारमेकराशेर्दशा भवितुमर्हति तेन पन्थोक्तमेव समीचीनं न नीलकण्ठोक्तम् । अन्तर्दशानयनेऽपि लग्ने विषमे क्रमात् समे व्युत्क्रमादन्तर्दशा लेख्या ।

तथा स्थूलान्तर्दशाविभगो वृद्धैरप्युक्तः—

"एकैकभावस्यैकैकं वर्षलग्नादि कल्पयेत् ॥

सा पर्यायदशा लग्ने युग्मे तु व्युत्क्रमाद्वदेत् ।

लग्नं युग्मं यदा तर्हि सम्मुखं तस्य चादिभम्"–इति ॥

पर्यायदशाऽर्थादन्तर्दशा । यदि लग्नं समराशिस्तदा तस्य सम्मुखं तदादिराशिः । यथा वृषस्य मेषो मीनस्य कुम्भ इति ॥ ३३ ॥

भा०—किसी राशि के दशामान में बारह का भाग देना उतना ही उसमें प्रत्येक राशि के अन्तर्दशा का मान होगा विषम राशि में तदादि क्रम से, सम राशि में तदादि उत्क्रम से अन्तर्दशा होती है। इस प्रकार अन्तर्दशा की संख्या १४४ होती है। पंत टीकाकार ने लिखा है कि सब दशाओं में आरम्भ

लग्न से ही होता है—इसका तात्पर्य यह कि चर दशा तथा वर्णदादि दशाओं में दशा का आरम्भ लग्न से ही होता है—इसका खण्डन नीलकण्ठ ने इस प्रकार किया है कि वर्णद दशा बनाने में लग्न होरा लग्न के वल के वश दशा वनाई जाती है लग्न वलवान हो तो लग्न के वश, होरालग्न वलवान हो तो होरालग्न के वश दशा वनेगी अतः लग्न होरालग्न दोनों में जो वलवान हो तदादि दशा लिखना उचित है। परन्तु नीलकण्ठ का इस प्रकार का लिखना भ्रममूलक है। क्योंकि लग्न होरा लग्न के वल के वश केवल दशा के वर्षादिमान लाना लिखा गया है वह जो वर्षादि दशामान निकलता है सो लग्नादि राशि का ही दशा-मान होता है होरा लग्नादि का या वलवान का नहीं होता—क्योंकि यदि वल के वश दशा लिखी जायगी तो कई राशियों की दशा दो दो बार पड़ जायगी और कितने राशियों की दशा होगी ही नहीं—यदि मान लिया जाय कि लग्न होरालग्न में वलवान होरालग्न हुआ—तो पहले उसकी दशा होगी—पुनः वही होरालग्न जिस भाव में पड़ा—उसका जो होरालग्न होगा—उससे भी वलवान यदि वह भाव ही हुआ तो दो वार उसी राशि की दशा हो गई परन्तु ऐसा विचार कहीं नहीं पाया जाता—अतः पन्त का लिखना ही ठीक है। इसमें स्थूल अन्तर्दशा की जो विधि लिखी है उससे भी वड़ा प्रयोजन निकलता है—अर्थात् लग्नादि भावों को जन्म वर्ष से शुरू कर के एक एक वर्ष जानना—इसी को ताजक में मुन्था कहते हैं। विंशोत्तरी दशा में जो वर्तमान समय में दशान्तर्दशादि को उनका जन्म लग्न के सदृश उस वर्ष लग्न से भी विचार करने से तथा उसे लग्न वश गोचरीय ग्रहों की भी चाल का विचार कर लेने से वहुत ठीक फल का

निश्चय हो जाता है—इसका अनुभव करना ज्यौतिषियों के लिए आवश्यक है ॥३३॥

अथ होराद्यपेक्षां निवर्त्तयन्नाह।

## होरादयः सिद्धाः ॥३४॥

## इति जैमिनीयसूत्रे प्रथमोध्यायस्य प्रथमपादः।

होरदयःपदार्थाः सिद्धाः शास्त्रान्तरप्रसिद्धा ग्राह्याः।
तदुक्तं वृद्धैः—
"राशेरर्धं भवेद्धोरास्ताश्चतुर्विंशतिः स्मृताः।
मेषादितासां होराणां परिवृत्तिद्वयं भवेत् ॥
राशेस्त्रिभागो द्रेष्काणऽस्ते च षट्त्रिंशदीरताः।
परिवृत्तित्रयं तेषां मेषादेः क्रमशो भवेत् ॥
सप्तांशपास्त्वोजगृहे गणनीया निजेशतः।
युग्मराशौतु विज्ञेया सप्तमर्क्षाधिनायकात् ॥
नवांशेशाश्चरे तस्मात् स्थिरे तन्नवमादितः।
उभये तत्पञ्चमादेरिति चिन्त्यं विचक्षणैः ॥
द्वादशांशस्य गणना तत्तत्क्षेत्राद्धि निर्दिशेत्" इति।

यद्यप्येते पदार्थाः शास्त्रान्तरप्रसिद्धा एव तथाऽपि राशिप्राधान्यात् विलक्षणा इति चिन्त्यम् ॥३५॥

इति सूत्रार्थप्रकाशिकायां प्रथमे प्रथमः पादः सम्पूर्णः।

भा०—होरा इत्यादि पदार्थों को अन्य ग्रन्थों से समझ लेना। हमने अपने फलित संग्रह तथा फलितविकास नामक पुस्तक में पूर्ण रूप से इसका विचार लिख दिया है। जब से इस देश में यवनों का आगमन हुआ द्रव्य के लोभ वश इस देश के लोगों ने यवनों को आचार्य बना दिया और उनके अशुद्ध मतों का

भी संग्रह अपने ग्रन्थों में कर दिया इससे फलित शास्त्र बहुत विगड़ गया। इसको हमने यथा साध्य शुद्ध किया है ॥३४॥

प्रथमाध्याय का प्रथम पाद संपूर्ण हुआ

अथ "आत्माधिकः कलादिभिर्नभोगः सप्तानामष्टानां वा" इति सूत्रोपदिष्टमात्मकारकमधिकरोति—

**अथ स्वांशो ग्रहाणाम् ॥ १ ॥ पञ्चमूषिकमार्जाराः ॥ २ ॥ तत्र चतुष्पादः ॥ ३ ॥ मृत्यौकण्डू स्थौल्यं च ॥ ४ ॥ दूरे जलकुष्ठादिः ॥ ५ ॥ शेषाः श्वापदानि ॥ ६ ॥ मृत्युवज्जायाऽग्निकणश्च॥ ७ ॥**

अथेत्यनन्तरं ग्रहाणां मध्ये यः स्वांश आत्मकारकांशस्तमवलक्ष्य फलं वाच्यमिति। अत्र सर्वत्र स्वपदेनात्मकारकस्य ग्रहणं कर्त्तव्यम्-पञ्चशब्दान्मेषे कारकांशे मूषिकमार्जारादयो दुःखदा भवन्ति। तत्र वृषे कारकांशे चतुष्पादः सुखदा भवन्ति। मिथुनांशस्थे कारके कण्डूरोगः स्थौल्यं च भवतीत्यर्थः। कर्कटे कारकांशे जलभयं कुष्ठरोगश्च भवति। सिंहांशे कारके श्वापदानि शुनकादयो दुःखदा भवन्ति। जाया कन्या सा कारकांशश्चेत् तदा मृत्युवन्मिथुनवत् फलं कण्डूः स्थौल्यं तथाऽग्निकणेन दुःखं भवतीत्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

इस प्रकरण में कारकांशवश फल का विचार करना (पञ्च) मेषके नवांश में कारक हो तो मूषिक और मार्जार से दुःख हो (तत्र) वृष में चतुष्पद से सुख हो, (मृत्यौ) मिथुन में कण्डूरोग हो तथा स्थूल हो, ( दूरे ) कर्क में रोग का भय तथा कुष्ठ विकार हो, (शेष) सिंह में कुत्ता इत्यादि से कष्ट हो, (जाया) कन्या में मिथुन के सदृश फल हो तथा अग्नि भय हो ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

लाभे वाणिज्यम् ॥ ८ ॥

अत्र जलसरीसृपाः स्तन्यहानिश्च ॥ ९ ॥

समे वाहनादुच्चाच्च क्रमात् पतनम् ॥१०॥

जलचरखेचरखेटकण्डूदुष्टग्रंथयश्च रिष्फे ॥११॥

तडागादयो धर्मे ॥१२॥

उच्चे धर्मनित्यता कैवल्यं च ॥ १३ ॥

तुलायां कारकांशे वाणिज्य कर्म कर्त्ता। अत्र वृश्चिकांशस्थे कारके जलसरीसृपाः जलसर्पादयो दुःखदा भवन्ति। तथा स्तन्यहानिर्मातृदुग्धहानिश्च भवतीत्यर्थः। धनुषिकारकांशे वाहनादूर्ध्वप्रदेशाच्च क्रमात् पतनं भवति। रिष्फेमकरांशे कारके जलचराः खेचराः खेटा ग्रहाश्च दुःखदा भवन्ति। दुष्टग्रन्थिर्वातव्याधिश्च गलगण्डादिकमित्यर्थः धर्मे कुम्भे कारकांशे तडागादिनिर्माणकर्त्ता ॥ उच्चे मीने कारकांशे नित्यं धर्मकर्त्ता मोक्षभाक् च।

कारकांशफलमुक्तंवृद्धैः—

"शुभराशौ शुभांशे वा कारकांशे धनी भवेत्।
तदंशकेन्द्रेषु शुभे राजा नूनं प्रजायते ॥
कारके शुभराश्यंशे लग्नांशस्थे शुभग्रहे।
उपग्रहस्य पाश्चात्त्येस्वोच्च स्वर्क्षशुभर्क्षगे ॥
पापदृग्योगरहिते कैवल्यं तस्य निर्दिशेत्।
मिश्रे मिश्रं विजानीयाद्विपरीते विपर्ययम् ॥
चन्द्रभृग्वारवर्गस्थे कारके पारदारिकः।
वृषतौल्यंशकगते तस्मिन् वाणिज्यवान् भवेत् ॥

"मेषसिंहांशके तस्मिन् ब्रूयान्मूषिकदंशनम्।
कारके कार्मुकांशस्थे वाहनात् पतनं भवेत्" ॥

उपग्रहस्यपाश्चात्येऽन्त्ये द्वादशे इत्यर्थः। उपग्रह उपखेट इति ॥ ७—१३ ॥

(लाभ) तुला में वाणिज्य करे। (अत्र) वृश्चिक में जल से सर्पादि से भय हो मातृ दुग्ध की हानि हो। (सम) धनु में वाहन से वा उच्च स्थान से गिरे। (रिष्फे) मकर में जलचर पक्षी ग्रह इनकी बाधा हो कण्डू रोग वा दुष्ट ग्रन्थिगण्डमालादि का भय हो। (धर्म) कुम्भ में तडागादि निर्माण कराने वाला हो। (उच्चे) मीन में धर्म करने वाला हो तथा उसका मोक्ष भी होता है ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ १२ ॥ १३ ॥

कारकांशे ग्रहस्थितिवशेन फलान्याह।

**तत्र रवौ राजकार्यपरः ॥ १४ ॥ पूर्णेन्दुशुक्रयोर्भोगी विद्याजीवी च ॥१५॥ धातुवादी कौन्तायुधो वह्निजीवी च भौमे ॥१६॥ वणिजस्तन्तुवायाः शिल्पिनोव्यवहारविदश्चसौम्ये ॥१७॥ कर्मज्ञाननिष्ठा वेदविदश्च जीवे ॥ १८ ॥ राजकीयाः कामिनः शतेन्द्रियाश्च शुक्रे ॥१९॥ प्रसिद्धकर्माजीवः शनौ ॥२०॥ धानुष्काश्चौराश्च जाङ्गलिका लोहयन्त्रिणश्च राहौ ॥२१॥ गजव्यवहारिणश्चोराश्च केतौ ॥२२॥ रविराहुभ्यां सर्पनिधनम् ॥२३॥ शुभदृष्टे तन्निवृत्तिः ॥ २४ ॥ शुभमात्रसम्बन्धाज्जाङ्गलिकः ॥ २५ ॥**

**कुजमात्रदृष्टे गृहदाहकोऽग्निदो वा ॥२६॥ शुक्रदृष्टेर्न दाहः ॥२७॥ गुरुदृष्टेस्त्वासमीपगृहात् ॥२८॥**

तत्र कारकांशे रवौ सूर्ये सति राजकार्यपरो राजकार्यकर्त्ता भवतीतिपूर्णेन्दुशुक्रयोः सतोःभोगी विद्याजीवी च भवति । भौमे कारकांशे धातुवादी रसायनविद्यावान् कौन्तनामकशस्त्र धारण-कर्त्ता वह्निजीवी अग्निव्यापाराज्जीविकाकर्त्ता । सौम्ये बुधे कार-कांशे वणिक्कर्मकर्त्ता तन्तुवायः सूत्रनिर्माणकर्त्ता शिल्पी चित्र-कर्मकर्त्ता व्यवहारे पटुश्चैवं जनो भवति । जीवे गुरौ कारकांशे स्थिते कर्मज्ञानादयो भवन्ति । शुक्रे कारकांशे राजकीया राज-कर्मकर्त्तारः कामिनः कामकलापटवःशतेन्द्रियाः शतवर्षजीवि-नश्च भवन्ति । शनौ कारकांशे प्रसिद्ध कर्मणा जीविकाकर्त्ता । राहौ कारकांशे धनुर्विद्यायां पटुश्चोरश्च, अथवा जाङ्गलिको विषवैद्यो लोहयन्त्रिणश्च—एवं जना भवन्ति । मध्ये चकारोपा-दानाद्वैकल्पिकमिदं फलम् । केतौ कारकांशे गजव्यवहारिणो हस्तिव्यवहारकारिणश्चोराश्च जना भवन्ति । रविराहुभ्यां मिलि-ताभ्यां कारकांशे स्थिताभ्यां सर्पान्मरणम् । रविराहुभ्यां संयुक्ते कारकांशे शुभग्रहेण दृष्टे तन्निवृत्तिः सर्पान्मृतिर्नस्यात् कारकांशे केवलशुभसम्बन्धाज्जाङ्गलिको विषवैद्यो भवति । अत्रापिरवियोगे एवं फलम् । उक्तं च—

"कारकांशे तमोभानू शुभषड्वर्गसंयुतौ ।
विषवैद्यो भवेन्नूनं विषहर्त्ता विचक्षणः ॥

कारकांशे रविराहुभ्यां युक्ते कुजमात्रदृष्टे गृहदाहको ऽग्निदो वा भवति । यथा—

"भौमेक्षिते कारकांशे भानुस्वर्भानुसंयुते ।
अन्यग्रहा न पश्यन्ति स्ववेश्मपरदाहकः ॥२६॥

कारकांशे रविराहुयुक्ते शुक्रदृष्टे सति न दाहकः किन्त्वग्निदः स्यात् ॥ कारकांशे रविराहुभ्यां युक्ते गुरुदृष्टे तदा समीपगृहपर्यन्तं दाहकः स्यान्न स्वगृहमात्रस्य । यथोक्तम्—

"यदि सौम्येक्षिते स्वांशे ह्यग्निदो नैव जायते ।
पापर्क्षे च गुरुर्दृष्टेः समीपगृहदाहकः"–इति ॥

कारकांशराशिमें सूर्य हो तो राजकार्य करे, पूर्णचन्द्रमा तथा शुक्र हो तो भोगी और विद्याजीवी हो। मंगल हो तो रसायन जानने वाला, शस्त्रधारी, और अग्नि से जीविका करने वाला हो, बुध हो तो व्यापार करने वाला–सूत्र बनाने वाला चित्रकारी करने वाला तथा व्यवहारज्ञ हो । बृहस्पति हो तो कर्म और ज्ञान में श्रद्धा हो वेद को जानने वाला हो शुक्र से राजकर्म करने वाला और सौ वर्ष तक जीने वाला हो शनि हो तो प्रसिद्ध कर्म से जीविका करने वाला होवे। राहु कारकांशमें हो तो धनुष रखने वाला, चोर, और विषवैद्य हो। केतु हो तो हाथी का व्यापार करने वाला तथा चौर हो ॥२२॥ सूर्य और राहु दोनों हों तो सर्प से मृत्यु होती है ॥२३॥ शुभग्रह की दृष्टि से अशुभ फल मिट जाते हैं ॥२४॥ कारकांश में अनेक शुभ मात्र का ही सम्बन्ध हो तो विषवैद्य हो ॥२५॥ कारकांश को केवल मंगल देखता हो तो गृहदाहक वा अग्निदहो, कारकांशको मंगल तथा शुक्र भी देखें तो गृहदाहक न हो। बृहस्पति और मंगल देखते हों तो नगीच के गृहका दाह करे । २६–२८॥

## सगुलिके विषदो विषहतो वा ॥२९॥

गुलिकसहिते कारकांशे परस्मै विषदाता वा स्वयं विषेणहतः स्यात् । गुलिकानयनप्रकारस्त्वित्थं वृद्धैरुक्तः ।

"रविवारादि शन्यन्तं गुलिकादि निरूप्यते ।
दिवसानष्टधा भक्त्वा वारेशाद्गणयेत् क्रमात् ॥
अष्टमांशो निरीशः स्याच्छन्यंशो गुलिकः स्मृतः ।
रात्रिरप्यष्टधा भक्त्वा वारेशात् पञ्चमादितः ॥
गणयेदष्टमः खण्डो निष्पतिः परिकीर्त्तितः ।
शन्यंशो गुलकः प्रोक्तो गुर्वंशो यमघण्टकः ॥
भौमांशो मृत्युरादिष्टो रव्यंशः कालसंज्ञकः ।
सौम्यांशोऽर्धप्रहरकः स्पष्टकर्मप्रदेशकः ॥

इति स्पष्टार्थाः श्लोकाः ।

एवं रव्यादिवारेषु दिवा सप्तमषष्ठपञ्चमचतुर्थतृतीय द्वितीय प्रथमखण्डो गुलिको भवति । रात्रौ तृतीय द्वितीय प्रथम सप्तम षष्ठ पञ्चम चतुर्थ खण्डो गुलिको भवति । तेन दिने दिनगतं वारक्रमेणैभिः खण्डैः संगुण्य अष्टभिर्भक्तं यल्लभ्यते तद्गुलिकान्त्यकालेष्टम् । रात्रौ रात्रिमानं वारक्रमेण स्वखण्डकेन सङ्गुण्य अष्टभिर्भक्तं यल्लभ्यते तद्दिनमानमध्ये योज्यं तदा सूर्योदयाद्गुलिकान्त्येष्टकालो भवति एवमयमेव गुलिकमुहूर्त्तः दिवा कुलिकः यो भौमांशो मृत्युनामा स तु कण्टक इति नाम्ना प्रसिद्धः । कालसंज्ञकस्तु । "रवौ वर्ज्यं चतुःपञ्च सोमे सप्तद्वयं तथा" ।

इत्यादिनाऽर्धयामस्वरुपेणैव त्याज्यः । बुधांशरूपोऽर्धप्रहरस्तु कालवेला इति नाम्ना लोके प्रसिद्धः । परमयं क्रमस्तुदिवा एव प्राप्यते न रात्रौ । स्पष्टकर्मप्रदेशक इति त्रैराशिकेनैतेषां स्पष्टीकरणमिष्टकालवशाद्विधायार्थात् यथा होरालग्नभावलग्नादीनां स्वेष्टवशात् स्पष्टीकरणं प्रोक्तं तथैवैतेषामपि स्पष्टीकरणं कार्यम् । यथा दिनमानमध्ये यदि रात्रिमानमध्ये वा अष्टमांशतुल्यः सम्पूर्णो विभागस्तदा दिनगतेन रात्रिगतेन वा कइति रीत्या यदागतं तद्गतखण्डे योजनीयं तदा स्फुटगुलिकादिकेष्ट-

कालो भवति एवं गुलिकादेरिष्टकालं स्पष्टं विधाय ततो निज-देशोदयानुसारेण तत्तदिष्टकालोपरि लग्नं स्पष्टं कार्यम् तानि-गुलिकादिलग्नानि॥ तस्मिन्नेवगुलिकराशौ यदि कारकांशश्चेत् तदा सगुलिको जात इति विवेचनीयम्। यत्तु सुबोधिन्यां "गुलिकादिलग्ने कस्यांशोऽस्ति स एव यदि कारकांशश्चेत् तदा सगुलिको जात इति विवेचनीयम्" इत्युक्तं तदसङ्गतम्। यतः पूर्वं कुत्रापि "तत्र रवौ राजकार्यपरः" इत्यादिसूत्रटीकायामिदं नोक्तम् यद्रविर्यस्मिन्नंशेव्यवस्थितस्तस्मिन्नेवांशे यदिकारकश्चेत् तदा रविसंयुक्तो जातः। तेनेदं युक्तिविरुद्धं प्रमाणवाह्यं चेति॥२९॥

गुलिक के साथ कारकांश हो तो दूसरे को विष देवे अथवा स्वयं विषसे मारा जाय। गुलिक बनाने की रीति यह है दिनमान को रविवारादिक्रमसे ६, ५, ४, ३, २, १, ० से गुणदेना और ८ का भाग देना तो गुलिक का आरम्भसमय होगा, उसमें इष्टकालका अष्टमांश जोड़देना तो स्पष्टगुलिकका इष्टकालहोगा। रात को बनाना हो तो रात्रिमानको रविवारादिक्रमसे २, १, ० ६, ५, ४, ३ से गुणा कर आठ का भागदेना उसमें रात्रि गत का अष्टमांश जोड़ देना तो रात्रि का इष्टकाल होगा उसमें दिनमान जोड़ने से सूर्योदयादिक इष्ट काल होगा। इस इष्टसमय पर ता-त्कालिकसूर्य बना कर जो लग्न होगा उसको गुलिक लग्न कहते हैं वही राशि यदि कारकांश हो तो सगुलि हुआ यह जानना चाहिये। नीलकण्ठ ने अपनी टीका में गुलिक खंड के अन्त के समय के लग्न को गुलिक लग्न लिखा है। सर्वार्थचिन्तामणि—इत्यादि पुस्तकों में स्थूल ध्रुवा लिखी है जैसे रविवार को छब्बीस सोमवार को बाइस इत्यादि यह सब स्थूल प्रकार है। क्योंकि सम्पूर्ण खण्डका नाम गुलिक है उसके किसी नियत प्रदेश का नाम नहीं है—जैसे दिनमान बत्तीस दण्ड का हो

और बुधवार को गुलिक देखना है तो चतुर्थ अष्टमांश को गुलिक खण्ड कहेंगे अतः बारह दण्ड के बाद सोलह दण्ड के भीतर गुलिक काल कहा जायगा, इसके आरम्भ से अन्ततक एक ही लग्न रहेगा कभी आरम्भ में तथा अन्तमें दूसरे दूसरे लग्न होंगे कभी कभी आदि—मध्य और अन्तमें तीन लग्न भी हो सकता है, जिसलिए कि दिनभर में वही गुलिक खण्ड होगा अतः मध्यमें अनुपात द्वारा अपने इष्टकाल सम्बन्धी गुलिक का इष्टकाल बनाना और उस इष्टकाल पर लग्न बनाकर जो हो उसको गुलिक लग्न कहना यही सूक्ष्म और वास्तविक गुलिक साधन है, इसी प्रकार यमघंट मृत्युयोग काल और अर्धयाम लग्नों का भी आनयन करना, इसका प्रयोजन उपग्रह साधन में पड़ता है ॥ २९ ॥

**चंद्रदृष्टौ चोरापहृतधनश्चौरोवा ॥ ३० ॥**
**बुधमात्रदृष्टे बृहद्बीजः ॥ ३१ ॥**

सगुलिके कारकांशे चन्द्रदृष्टे चोरापहृतधनो वा स्वयं चौरः स्यात् सगुलिके कारकांशे केवलबुधेनैव दृष्टे बृहद्बीजः बृहन्मुष्कयुक्तः स्यात् ॥ ३० ॥ ३१ ॥

सगुलिक कारकांशको चन्द्रमा देखता हो तो वह चोर हो वा उसी का धन चोरी होवे। सगुलिक कारकांश को बुध देखता हो तो उसके वृषण बड़े हों ॥ ३० ॥ ३१ ॥

**तत्र केतौ पापदृष्टे कर्णच्छेदः कर्णरोगो वा ॥ ३२ ॥**
**शुक्रदृष्टे दीक्षितः ॥३३॥ बुधशनिदृष्टे निर्वीर्यः ॥३४॥**
**बुधशुक्रदृष्टे पौनःपुनिको दासीपुत्रो वा ॥ ३५ ॥**

## शनिदृष्टे तपस्वी प्रेष्यो वा ॥ ३६ ॥
## शनिमात्रदृष्टे सन्यासाभासः ॥ ३७ ॥

सगुलिकइति पदं निवृत्तम् । तत्र कारकांशे केतौ पापदृष्टे कर्णच्छेदो भवति वा कर्णयो रोगो भवतीति । तत्र द्वितीये कथं नोक्तम् । उच्यते ।

"कारकांशे केतुयुक्ते पापग्रहनिरीक्षिते ।
श्रोत्रच्छेदो भवेन्नूनं कर्णरोगोऽथवा भवेत् ॥"

इति प्रमाणदर्शनात् कारकांशे केतौ शुक्रदृष्टे दीक्षितो यज्ञकर्मणि दीक्षित इत्यर्थः कारकांशे केतौ वुधशनिभ्यां दृष्टे निर्वीर्यः स्यात् केतुना सहिते कारकांशे वुधशुक्राभ्यां दृष्टे पौनः पुनिकः पुनः पुनः प्रवक्ता वा दासीपुत्रः स्यात् सकेतौ कारकांशे शनिदृष्टे तपस्वी वा प्रेष्यो भृत्यः स्यात् सकेतौ कारकांशे शनिमात्रदृष्टे केवलेन शनिना दृष्टे संन्यासाभास संन्यासवेषमात्रमेव स्यात् न तु वास्तविकःसन्यास इति ॥ ३३-३७ ॥

कारकांश में केतुहो पापग्रहकी दृष्टि हो तो उसका कान काटा जाय अथवा कानमें रोग होवे ॥३२॥ सकेतु कारकांशको शुक्र देखता हो तो दीक्षित यानी यज्ञ करनेवाला वुध शनि देखता हो तो हीनवल वुधशुक्रदेखैं तो रुककर वोलने वाला वा दासी पुत्र हो, शनि की दृष्टी हो तो तपस्वी वा प्रेष्य हो केवल शनिकी ही दृष्टि हो तो कपटी संन्यासी हो ॥ ३३-३७ ॥

## तत्र रविशुक्रदृष्टे राजप्रेष्यः ॥ ३८ ॥

सकेताविति पदं निवृत्तम् तत्र कारकांशे रविशुक्राभ्यां दृष्टे राजप्रेष्यः । "कारकांशे यदा विप्र भृगुभास्करवीक्षिते ।
राजप्रेष्यो भवेद्वालः······"-इति दर्शनात् ॥

केवल कारकांशको रवि शुक्र देखता हो तो राजप्रेष्य हो ॥३८॥

अथ कारकांशाद्दशमफलमाह ।

**रिष्फे बुधे बुधदृष्टे वा मन्दवत् ॥३९॥ शुभ दृष्टे स्थैयः ॥४०॥ रवौ गुरुमात्रदृष्टे गोपालः ॥४१॥**

कारकांशाद्रिष्फे दशमे बुधे स्थिते वा बुधेन दृष्टे मन्दवत् "प्रसिद्धकर्माजीवः शनौ"–इति सूत्रोक्तं फलमूह्यम् कारकांशा दृशमे बुधे शुभदृष्टे स्थैयः स्थिरो भवति कारकांशाद्दशमे रवौ गुरुमात्रदृष्टे केवलेन गुरुणैव दृष्टे गोपालको भवति ॥३९-४१॥

कारकांशसे (रिष्फ) दशम में बुध हो वा बुध की दृष्टि हो तो शनिवत् फल हो यानी प्रसिद्ध कर्म से जीविका करै, कारकांश के दशम में बुध हो शुभग्रह की दृष्टि हो तो स्थिर हो, कारकांश के दशम में सूर्य हो केवल बृहस्पति की दृष्टि हो तो गोरक्षक होवे ॥३९-४१॥

अथ कारकांशाच्चतुर्थफलमाह ।

**दारे चन्द्रशुक्रदृग्योगात् प्रासादः ॥४२॥ उच्च-ग्रहेऽपि ॥४३॥ राहुशनिभ्यां शिलागृहम् ॥४४॥ कुजकेतुभ्यामैष्टिकम् ॥४५॥ गुरुणा दारवम् ॥४६॥ तार्णरविणा ॥४७॥**

कारकांशाद्दारे चतुर्थे चन्द्रशुक्रदृग्योगात् प्रासादः प्रासाद वान्भवति कारकांशाच्चतुर्थस्थे उच्चंगते ग्रहे तदाऽपि प्रासा-दवान् भवति कारकाशांचतुर्थे शनिराहुभ्यां मिलिताभ्यां स्थिता-भ्यां शिलागृहनिर्माणकर्त्ता भवति। कुजकेतुभ्यां मिलिताभ्यां स्थिताभ्यामैष्टिकमिष्टिकासम्बन्धिगृहकर्त्ता भवति । गुरुणा

दारुसम्बन्धि गृहं काष्ठगृहमित्यर्थः । रविणा तार्णं तृणोद्भयं गृहं करोति ॥ ४२-४७ ॥

कारकांश के (दार) चतुर्थस्थान में चन्द्रमा और शुक्रका योग वा दृष्टि हो तो वह प्रसाद वान हो कोई उच्चंगत ग्रह हो तो भी प्रसादवान हो शनि राहु से पत्थर का गृह मंगल केतु से इंटे का बृहस्पति से लकड़ी का और सूर्य हो तो तृण का गृह बनावे ॥ ४२-४७ ॥

अथ कारकांशान्नवमफलमाह ।

**समे शुभदृग्योगाद्धर्मनित्यः सत्यवादीगुरुभक्तश्च ॥४८॥ अन्यथा पापैः ॥४९॥ शनिराहुभ्यां गुरुद्रोहः ॥५०॥ गुरुरविभ्यां गुरावविश्वासः ॥५१॥**

समेकारकांशान्नवमे शुभग्दयोगान्नित्यं धर्म कर्त्ता सत्यवादी गुरुभक्तश्च नरो भवति । पापैरन्यथा अर्थात् पाप ग्रहस्य दृग्योगाद्धर्मनित्यत्वादि न भवतीति कारकांशान्नवमे शनिराहुभ्यां स्थिताभ्यां तद्द्रष्टृभ्यां वा गुरुणा सह द्रोहकृद्भवति गुरुरविभ्यां मिलिताभ्यां स्थिताभ्यां तद्द्रष्टृभ्यां वा गुरावविश्वासको भवति ॥४८-५१॥

कारकांश के (सम) नवम में शुभग्रह का योग वा दृष्टि हो- तो धर्म कर्ता और सत्यवादी हो पाप ग्रह के योग दृष्टि से पापी हो शनि और राहु नवम में हों तो गुरु से द्रोह करै सूर्य और बृहस्पति हों तो गुरु में विश्वास न हो ॥४८-५१॥

**तत्र भृग्वङ्गारकवर्गे पारदारिकः ॥५२॥ दृग्योगाभ्यामधिकाभ्यामामरणम् ॥ ५३ ॥ केतुना प्रति-**

**बन्धः ॥५४॥ गुरुणा स्त्रैणः ॥ ५५ ॥ राहुणाऽर्थनिवृत्तिः ॥५६॥**

कारकांशे भृग्वङ्गारकवर्गे शुक्रभौमान्यतरषड्वर्गे पारदारिकः परदारासक्तो भवति तत्र कारकांशान्नवमे भौमशुक्रान्यतरषड्वर्गे भौमशुक्रयोर्दृग्योगाभ्यामित्येवाधिकाभ्यामामरणं मरणपर्यन्तं परस्त्रीसक्तो भवति तत्र यदि केतोर्दृग्योगश्चेत् तदा प्रतिबन्धकः स्यादर्थान्मरणपर्यन्तं परस्त्रीसक्तो न स्यादिति। कारकांशे गुरुणा युक्ते वा दृष्टे स्त्रैणः स्त्रीलोलः स्यात् ॥५५॥

कारकांशे शुक्र भौमान्यतरषड्वर्गे राहुणा युक्ते वा दृष्टे परस्त्री निमित्तं द्रव्यनिवृत्तिर्धननाशः स्यात् ॥ ५६ ॥

कारकांश में शुक्र मंगल का वर्ग हो तो पर स्त्री संसक्त हो इनका योग वा दृष्टि भी हो तो मरण पर्यन्त पर स्त्री सक्त हो केतु का योग वा दृष्टि हो तो मरणान्त पर स्त्री संग न हो बीच में छुट जावे। गुरु का वर्ग योग वा दृष्टि हो तो स्त्री प्रिय हो राहु का योग वा दृष्टि हो तो पर स्त्री के लिये धन की हानि करै ॥५२–५६॥

अथ कारकांशात् सप्तम फलमाह।

**लाभे चन्द्रगुरुभ्यां सुन्दरी ॥ ५७ ॥ राहुणा विधवा ॥५८॥ शनिना वयोधिका रोगिणी तपस्विनी वा ॥५९॥ कुजेन विकलाङ्गी ॥६०॥ रविणा स्वकुले गुप्ता च ॥ ६१ ॥ बुधेन कलवती ॥६२॥**

कारकांशात् सप्तमे चन्द्रगुरुभ्यां मिलताभ्यां स्थिताभ्यां तस्य सुन्दरी स्त्री भवति कारकांशात् सप्तमे राहुणा युक्ते विधवा गमन कर्त्ता भवति कारकांशात् सप्तमे शनौ चेत् तदा तस्य

स्त्री वयोधिका वा रोगिणी वा तपस्विनी भवति कारकांशात् सप्तमे भौमे स्त्री विकलाङ्गी रवौ चेत् तदा स्वकुले गुप्ता रक्षिता चकाराद्विकलाङ्गी च बुधेन युक्ते कारकांशात् सप्तमे कलावती गीतवाद्यादिकलासु कुशला स्त्री भवति ॥ ५७–६२ ॥

कारकांश से (लाभ) सप्तम में चन्द्रमा बृहस्पति का सम्बन्ध हो तो स्त्री सुन्दरी हो, राहु का संबंध हो तो विधवा गमन कर्ता हो शनि का सम्बन्ध हो तो स्त्री रोगिणी वा तपस्विनी हो मंगल का सम्बन्ध हो तो अंग हीन हो, रवि का सम्बन्ध हो तो उसकी रक्षा अपने कुल में हो, बुधके सम्बन्ध से कलाओं की जानने वाली हो ॥ ५७–६२ ॥

**चापे चन्द्रेणानावृत्ते देशे ॥ ६३ ॥**

कारकांशाच्चतुर्थे चन्द्रेसति अनावृत्तेऽनाच्छादिते देशे स्त्रीसङ्गः स्यात् ॥ ६३ ॥

कारकांश से (चाप) चतुर्थ में चन्द्रमा हो तो विना पर्दे की जगह स्त्री संग करने वाला हो ॥ ६३ ॥

अथ तृतीय फलमाह

**कर्मणि पापे शूरः ॥६४॥ शुभे कातरः ॥६५॥**

कारकांशात् कर्मणि तृतीये पापे शूरो वीरः स्यात् ॥६४॥ कारकांशात् तृतीये शुभग्रहे कातरो भीरुः स्यात् ॥ ६५ ॥

कारकांश से (कर्म) तृतीय में पापग्रह हो तो शूर हो–शुभ ग्रह हो तो भीरुहो ॥६४–६५॥

**मृत्युचित्तयोः पापे कर्षकः ॥ ६६ ॥ समे गुरौ विशेषेण ॥ ६७ ॥**

कारकांशान्मृत्युचित्तयोस्तृतीयषष्ठयोः पापे पापग्रहे स्थिते

कर्षकः कृषिकर्त्ता स्यात् कारकांशान्नवमे गुरौ विशेषेण कृषि-कर्त्ता स्यात् ॥६६-६७॥

कारकांश से (मृत्यु) तृतीय और (चित्त) षष्ठ में पापग्रह हों तो कृषि कर्त्ता हो (सम) नवम में बृहस्पति हो तो विशेष कर (कर्षक) कृषि कर्म करने वाला हो ॥ ६६-६७ ॥

**उच्चे शुभे शुभलोकः ॥६८॥ केतौ कैवल्यम् ॥६९॥ क्रियचापयोर्विशेषेण ॥७०॥ पापैरन्यथा ॥७१॥**

कारकांशादुच्चे द्वादशे शुभे शुभग्रहे स्थितेशुभलोकप्राप्तिः कारकांशाद्द्वादशे केतौ कवैल्यं मुक्तिः स्यात् क्रियचापयोर्मीन-कुलीरयोराश्योः कारकांशाद्द्वाशस्थयोः केतुयोगे सति विशेषेण कैवल्यम् । चरदशायामत्र शुभः केतुः ।

तथा । "गुरुध्वजकविज्ञाः स्युर्यथापूर्वं शुभग्रहाः" । इत्युक्त्या केतौ शुभत्वमृषिणा प्रोक्तमिति ॥ कारकांशाद्द्वादशे पापैः पापग्रहैरन्यथा न मुक्तिर्न शुभलोकश्चेश्चेति ॥ ६८-७१ ॥

कारकांश से ( उच्च ) द्वादश मे शुभग्रह हो तो शुभलोक की प्राप्ति हो केतु हो तो मोक्ष हो मीन और कर्क राशि कारकांश के द्वादश में हो तो विशेष कर मोक्ष हो पापग्रह के होने से मोक्ष नहीं होता केतु इस ग्रन्थ में शुभ ग्रह है । ६८-७१

**रविकेतुभ्यां शिवे भक्तिः ॥७२॥ चन्द्रेण गौर्याम् ॥७३॥ शुक्रेण लक्ष्म्याम् ॥७४॥ कुजेन स्कन्दे ॥७५॥ बुधशनिभ्यां विष्णौ ॥७६॥ गुरुणा साम्बशिवे ॥७७॥ राहुणा तामस्यां दुर्गायां च ॥७८॥ केतुना गणेशे स्कन्दे च ॥७९॥**

कारकांशतो द्वादशेस्थिताभ्यां रविकेतुभ्यां शिवे भक्ति र्भवति एवमेवाग्रऽपि॥ तामस्यां भूतादिदेवतायां शेषं स्पष्टम्॥७२-७९॥

कारकांश के द्वादश में रवि और केतु हो तो शिव में भक्ति चन्द्रमा हो तो पार्वती में शुक्र हो तो लक्ष्मी में मंगल हो तो स्कन्द में-बुध शनि हो तो विष्णु में बृहस्पति हो तो साम्ब शिव में राहु हो तो तामसी देवताओं में वा दुर्गा में और केतु हो तो गणेश या स्कन्द में भक्ति हो ॥७२-७९॥

## पापर्क्षे मन्दे क्षुद्रदेवतासु ॥८०॥ शुक्रे च ॥८१॥ अमात्यदासे चैवम् ॥८२॥

कारकांशे तद्द्वादशे च पापराशौ स्थिते शनौ क्षुद्रदेवतासु यक्षिणीकर्णपिशाच्यादिषु भक्तिर्भवति॥ कारकांशे तद्द्वादशे वा पापराशौ स्थिते शुक्रे च क्षुद्रदेवतासु भक्तिरित्यर्थः॥ कारकान्न्यूनोऽमात्यकारकस्तदामात्यदासेऽमात्यकारकाद्व्यादि-गणनया षष्ठतमे ग्रहे स्थिते क्षुद्रदेवतासुभक्तिरित्यर्थः। अथवा यथा कारकांशात् तद्द्वादशाद्वा विचारः क्रियते तथैवामात्याका-रकाद्दासे षष्ठे चैव विचारः कर्त्तव्य इति। अथवाऽमात्यकारकस्य यो दासोऽनुचरोऽर्थाद्भ्रातृकारकस्तस्माद्भक्तिविचारः कर्त्तव्यः। अनेनैवाशयेनाग्रे ऋषिणा "अमात्यानुचराद्देवताभक्तिः" इति सूत्रं प्रणीतम्। अत्र कः पक्षो युक्तः यतः शनिना शुक्रेणा-मात्यदासेन च फलसाम्ये पापर्क्षे मन्दे शुक्रेऽमात्यदासे च क्षुद्र देवतासु इति सूत्र प्रणीतं स्यादथवा शुक्रामात्यदासाभ्यां फल-समत्वे शुक्रामात्यदासयोश्चैवमिति सूत्रं स्यात्। सूत्रत्रयपृथक्-रणसामर्थ्यात् अमात्यकारकात् षष्ठभावेऽप्येवमेव भक्तिविचारः कर्त्तव्य इत्येवार्थः समुचित इति ॥ ८०-८२ ॥

पापग्रह के राशि में शनि हो तो क्षुद्र देवता में भक्ति हो

शुक्र हो तौभी क्षुद्र देवता में भक्ति हो अमात्य कारक के षष्ठ-भाव से भी इसी प्रकार भक्ति का विचार करना । इस सूत्र के अर्थ में किसी का मत है कि शनिशुक्र और अमात्यदास सबों का एक ही फल है। यदि एक ही फल होता तो तीन सूत्र नहीं बनते, किसी का मत है कि अमात्य कारसे रव्यादि गणना वश जो छठाँ ग्रह उससे भक्ति का विचार करना, यह अर्थ भी ठीक नहीं है क्योंकि अक्षरों से भाव की ही संख्या जानी जाती है ग्रह की नहीं । दूसरा मत है कि अमात्य कारक का दास अर्थात् अनुचर भ्रातृकारक उससे भक्तिका विचार करना परन्तु आगे लिखा है कि "अमात्यानुचराद्देवता भक्तिः" इसके कहने से पुनरुक्ति दोष हो जाता है । इस कारण अमात्यकारक के षष्ठ भाव से भी भक्ति का विचार कहना यही अर्थ ठीक है । ८०-८२ ॥

**त्रिकोणे पापद्वये मान्त्रिकः ॥ ८३ ॥ पापदृष्टे निग्राहकः ॥ ८४ ॥ शुभदृष्टेऽनुग्राहकः ॥ ८५ ॥**

कारकांशात् त्रिकोणे पञ्चमनवमयोः पापद्वये प्राप्ते मान्त्रिको मन्त्रशास्त्रवेत्ता स्यात् ॥ ८३ ॥ त्रिकोणे कारकांशात् पापद्वये पापदृष्टे तदा निग्रहकर्त्ता स्यात् ॥ ८४ ॥ त्रिकोणे कारकांशात् पापद्वये शुभदृष्टेऽनुग्रहकर्त्ता लोकेष्वनुग्रहकर्त्ता स्यात् ॥ ८५ ॥

कारकांश से त्रिकोणमें दो पापग्रह हों तो मन्त्रशास्त्रवेत्ता हो पापग्रह की दृष्टि हो तो निग्रह करनेवाला और शुभग्रह की दृष्टि हो तो अनुग्रह करने वाला हो ॥ ८३-८५ ॥

**शुक्रेन्दौ शुक्रदृष्टे रसवादी ॥ ८६ ॥ बुधदृष्टे भिषक् ॥८७॥ चापे चन्द्रे शुक्रदृष्टे पाण्डुश्वित्री ॥८८॥ कुजदृष्टे महारोगः ॥८९॥ केतुदृष्टे नीलकुष्ठम् ॥९०॥**

कारकांशे चन्द्रे शुक्रेण दृष्टे रसवादी रसायनविद्यापटुर्भवति कारकांशे चन्द्रे बुध दृष्टे भिषग्वैद्यः स्यात् कारकांशाच्चतुर्थे चन्द्रे शुक्रेण दृष्टे पाण्डुरोगी श्वेतकुष्ठी वा भवति कारकांशाच्चतुर्थे चन्द्रे भौमेन दृष्टे महारोगी भवति कारकांशाच्चतुर्थे चन्द्रे केतुदृष्टे सति नील कुष्ठं स्यात् ॥८६-९०॥

(शुक्र) कारकांश में चन्द्रमा हो शुक्र की दृष्टि हो तो रसायन जाननेवाला हो—बुध की दृष्टि हो तो वैद्य हो कारकांश से (चाप) चतुर्थ में चन्द्रमा हो, शुक्र देखता हो तो पाण्डुरोग वा श्वेतकुष्ठ हो—मङ्गल की दृष्टि हो तो महाकुष्ठ हो केतु देखता हो तो नील कुष्ठ हो ॥ ८६-९० ॥

**तत्र मृतौ वा. कुजराहूभ्यां क्षयः ॥ ९१ ॥ चन्द्रदृष्टौ निश्चयेन ॥९२॥ कुजेनपिटकादिः ॥९३॥ केतुना ग्रहणी जलरोगो वा ॥९४॥ राहुगुलिकाभ्यां क्षुद्रविषाणि ॥ ९५ ॥**

तत्र कारकांशाच्चतुर्थे मृतौ पञ्चमे वा कुजराहुभ्यां मिलिताभ्यां स्थिताभ्यां क्षयरोगवान् स्यात् ॥ कारकांशाच्चतुर्थे पञ्चमे वा स्थितयोः कुजराहोरुपरि चन्द्रदृष्टौ सत्यां निश्चयेन क्षयरोगो भवति ॥ कारकांशाच्चतुर्थे पञ्चमे वा कुजेन पिटकादिरोगो भवति ॥ कारकांशाच्चतुर्थे केतुना ग्रहणी संग्रहणी जलोदरो वा स्यात् ॥ कारकांशाच्चतुर्थे पञ्चमे वा राहुगुलिकाभ्यां स्थिताभ्यां क्षुद्रविषाणि भवन्ति ॥ ९१-९५ ॥

कारकांश से (तत्र) चतुर्थ या (मृत) पञ्चम में मंगल राहु हो तो क्षय-रोग हो, चन्द्रमा देखता हो तो निश्चय करके क्षय रोग हो । मंगल केवल हो तो पिटक ( फोड़ा ) हो, केतु हो तो संग्र-

हणी वा जल रोग हो, राहु और गुलिक हों तो वृश्चिकादि क्षुद्र विष से कष्ट होवें ॥ ९१-९५ ॥

तत्र शनौ धानुष्कः ॥९६॥ केतुना घटिकायन्त्री ॥९७॥ बुधेन परमहंसो लगुडो वा ॥९८॥ राहुणा लोहयन्त्री ॥९९॥ रविणा खड्गी ॥१००॥ कुजेन कुन्ती ॥१०१॥

पञ्चमेति पदं निवृत्तम् । कारकांशाच्चतुर्थे शनौ धानुष्को धनुषि निपुणः स्यात् ॥ ९६ ॥ कारकांशाच्चतुर्थस्थकेतुना घटी यन्त्रनिर्माता भवति ॥ ९७ ॥ शेषं स्पष्टम् ॥ ९८ ॥ १०१ ॥

कारकांश के चतुर्थ में शनि हो तो धनुष को रखे, केतु हो तो घटीयन्त्रादि यन्त्रज्ञ हो, बुध हो तो परमहंस वा सन्यासी हो, राहु हो तो लोहा का यन्त्रज्ञ हो, रवि हो तो खड्गधारी हो, मंगल हो तो भाला धारण करे ॥ ९६-१०१ ॥

मातापित्रोश्चन्द्रगुरुभ्यां ग्रन्थकृत् ॥ १०२ ॥ शुक्रेण किञ्चिदूनम् ॥१०३॥ बुधेन ततोऽपि ॥१०४॥ शुक्रेण कविर्वाग्मी काव्यज्ञश्च ॥ १०५ ॥ गुरुणा सर्वविद्ग्रान्थिकश्च ॥ १०६ ॥ न वाग्मी ॥ १०७ ॥ विशिष्य वैयाकरणो वेदवेदाङ्गविच्च ॥१०८॥ सभाजड़ः शनिना ॥ १०९ ॥ बुधेन मीमांसकः ॥११०॥ कुजेन नैयायिकः ॥ १११ ॥ चन्द्रेण सांख्ययोगज्ञः साहित्यज्ञोगायकश्च ॥ ११२ ॥ रविणा वेदान्तज्ञो

**गीतज्ञश्च ॥११३॥ केतुना गणितज्ञः ॥ ११४ ॥ गुरु सम्बन्धेन सम्प्रदायसिद्धिः ॥ ११५ ॥**

कारकांशात् पञ्चमे कारकांशे वा चन्द्रगुरुभ्यां स्थिताभ्यां ग्रन्थकृत् स्यात् चन्द्रशुक्राभ्यां स्थिताभ्यां किञ्चिदूनं ग्रन्थ कर्त्तृत्वं स्यात्। अग्रे शुक्रेण फलस्य वक्ष्यमाणत्वादत्र चन्द्र शुक्राभ्यामित्यर्थो युक्तः सर्वत्रैव योगे गुरुसम्बन्धेन गुरोर्योग-दृष्टिषड्वर्गादिरूपसम्बन्धेन पूर्वोक्तग्रन्थकर्त्तृत्वादिकं स्यात् शेषंस्पष्टम् ॥

कारकांश में वा उसके (माता) पञ्चम में चन्द्रमा और बृह-स्पति हो तो ग्रन्थकर्त्ता हो-शुक्र चन्द्रमा हो तो पूर्ण ग्रन्थकार न हो, बुध चन्द्रमा हो तो उससे भी अल्पग्रन्थकार हो केवल शुक्र हो तो कवीवाग्मी और काव्यज्ञ हो केवल बृहस्पति हो तो सर्वज्ञ तथा ग्रन्थकर्त्ता हो विशेष कर वैयाकरण तथा वेद और वेदाङ्ग का जानने वाला होवे किन्तु बोलने वाला न हो।

शनि उन स्थानों में हो तो सभा में वक्ता न हो बुध हो तो मीमांसा जानने वाला हो-मंगल हो तो न्याय शास्त्रज्ञ हो चन्द्रमा हो तो सांख्य योग साहित्य और गान विद्या को जाने, रवि हो तो वेदान्त और गान जाने, केतु हो तो गणितज्ञ हो परन्तु सब योगों में बृहस्पति का योग वा दृष्टि हो तभी उस विषय में पूर्ण ज्ञानवान् होता है ॥ १०२-११५ ॥

**भाग्ये चैवम् ॥११६॥ सदा चैवमित्येके ॥११७॥**

कारकांशेतस्यपञ्चमेवा यथा विद्याविचारः क्रियते तथा भाग्ये द्वितीयेऽपि विचारः कार्यः ॥ ११६ ॥ सदा कारकांशात् तृतीयेऽप्येवं विचारः कर्त्तव्य इति-एके वदन्ति ॥ ११७ ॥

कारकांश में वा उसके पञ्चम में जैसे विद्या का विचार किया गया वैसे ही कारकांश से ( भाग्य ) द्वितीय में भी विद्या का विचार करना और ( सदा ) तृतीय में भी विचार करना ऐसा भी किसी का मत है ॥ ११६-११७ ॥

**भाग्ये केतौ पापदृष्टे स्तब्धवाक् ॥ ११८ ॥**

कारकांशाद्भाग्ये द्वितीये केतौ स्थिते सति स्तब्धवाक् शीघ्रोत्तरदानसमर्थो न भवति ॥ ११८ ॥

कारकांशके द्वितीय में केतु हो पापग्रह की दृष्टि हो तो रुक कर बोलने वाला हो ॥ ११८ ॥

**स्वपितृपदाद्भाग्यरोगयोः पापसाम्ये केमद्रुमः ॥११९॥ चन्द्रदृष्टौ विशेषेण॥१२०॥ सर्वेषां चैव पाके॥१२१॥**

स्वपितृपदात् कारकाज्जन्मलग्नाज्जन्मलग्नपदाद्वा भाग्यरोगयोर्द्वितीयाष्टमस्थानयोः- पापसाम्ये सति केमद्रुमयोगो भवति । चन्द्रदृष्ट्या विशेषतः केमद्रुमो भवति ।

तथा च वृद्धाः ।

"आरुढाज्जन्मलग्नाद्वा पापौ स्त्रीहानिगौ यदि ।
केवलौ सग्रहत्वेऽपि समसंख्यौ शुभाशुभौ ॥
चन्द्रदृष्टौ विशेषेण योगः केमद्रुमो मतः"—इति ।

यत् तु "कारकलग्नारूढेभ्य इति स्वामिभिरुक्तं तद्वृद्धसम्मतं न" इति श्रीनीलकण्ठेन प्रतिपादितं तदसंगतम् । कारकप्रकरणे पठितत्वात् तथा स्वशब्दस्य कारकपदबोधकत्वात् ॥ ११९ ॥ पूर्वोक्तानि फलानि कदा भविष्यन्तीत्याशङ्कायामाह । सर्वेषां राशीनां ग्रहाणां वा पाके दशायाम् । अथ सर्वेषां ग्रहाणां राशीनां वा दशारम्भकाले केमद्रुमयोग विचारः कार्यः ।

उक्तं च वराहेण।
"इति निगदिता योगाः सार्धफलैरिह नाभसाः।
नियतफलदाश्चिन्त्या ह्येते समस्तदशास्वपि" ॥ १२१ ॥

आत्मकारक से, लग्न से वा लग्नपद से ( भाग्य ) द्वितीय ( रोग ) अष्टम में पाप तुल्य हो तो केमद्रुम योग जानना, चन्द्रमा की दृष्टि हो तो विशेष करके केमद्रुम जानना। इन सब का फल जिस राशि ग्रह के सम्बन्ध से योग होता हो उनकी दशा में होता है ॥ ११९—१२१ ॥

## इति जैमिनिसूत्रे प्रथमाध्यायस्य द्वितीयः पादः।

---

## अथ पदम् ॥ १ ॥

अथेत्यनन्तरं "यावदीशाश्रयं पदमृक्षाणाम्"—इति सूत्र सिद्धं पदमवलम्ब्य फलमुपदिशति ॥ १ ॥

**व्यये सग्रहे ग्रहदृष्टे श्रीमन्तः ॥२॥ शुभैर्न्याय्यो लाभः ॥ ३ ॥ पापैरमार्गेण ॥ ४ ॥ उच्चादिभिर्विशेषात् ॥ ५ ॥**

व्यये पदादेकादशे सग्रहे केन चिद्ग्रहेण शुभेन पापेन वा सहिते वा दृष्टे पुरुषः श्रीमान् स्यात् ॥ २ ॥ शुभग्रहैर्युक्तदृष्टे लग्नपदाल्लाभे लाभो न्याय्यो न्यायमार्गाल्लाभः स्यात् ॥ ३ ॥ पाप ग्रहैर्युक्तदृष्टे तस्मिन्नमार्गेण कुत्सितवृत्त्या लाभः स्यादिति। अनेनैव मिश्रग्रहयुतदृष्टे मिश्रप्रकारेण लाभः स्यादिति सूचितम् ॥ ४ ॥ उच्चादिभिः स्थितैर्ग्रहैरर्थात् उच्चस्वराशिमूलत्रिकोणादिगतैर्ग्रहैर्विशेषाल्लाभः स्यात् ॥ ५ ॥

पद के ( व्यय ) एकादश में ग्रहयोग वा दृष्टि हो तो वह श्रीमान् होता है, शुभग्रह के योग दृष्टि से न्यायपूर्वक लाभ होता है, पापग्रह के योग दृष्टि से अमार्ग से लाभ होता है। उच्चादिराशिगत ग्रह का योग हो तो विशेष लाभ होता है ॥२-५॥

**नीचे ग्रहदृग्योगाद्व्ययाधिक्यम् ॥ ६ ॥**

नीचे लग्नपदाद्द्वादशे ग्रहदृग्योगाद्व्ययाधिक्यं स्यात्। अत्रापि पूर्ववदेव शुभपापाभ्यां योगः । द्वादशे शुभे सत्कर्मणि व्ययः । पापे नीचकर्मणि व्ययः मिश्रे मिश्रप्रकारेण व्ययः ॥ ६ ॥

पद से ( नीच ) द्वादश में ग्रहयोग दृष्टि होने से अधिक व्यय पूर्ववत् होता है ॥ ६ ॥

**रविराहुशुक्रैर्नृपात् ॥७॥ चन्द्रदृष्टौ निश्चयेन ॥८॥ बुधेन ज्ञातिभ्यो विवादाद्वा ॥९॥ गुरुणा करमूलात् ॥१०॥ कुजशनिभ्यां भ्रातृमुखात् ॥११॥ एतैर्व्यय एवं लाभः ॥१२॥**

पदाद्द्वादशगै रविराहुशुक्रैः सद्भिर्नृपाद्राज्ञो व्ययः ॥ पदाद्द्वादशेरव्यादिग्रहे स्थिते चन्द्रदृष्टौ सत्यां निश्चयेन राजमूलाद्व्यय इति ॥ बुधेन पदाद्द्वादशगेन ज्ञातिनिमित्तं ज्ञातिपोषणे वा विवादाज्झकटकादिभिर्व्ययः स्यात् ॥ पदाद्द्वादशस्थेन गुरुणा करमूलाद्व्ययः ॥ कुजशनिभ्यां पदाद्द्वादशेस्थिताभ्यां भ्रात्रादिभिर्व्ययः स्यात् ॥ एतैर्ग्रहैरेव व्ययस्थैर्व्ययो लाभस्थैर्लाभः ॥७…११॥

अत्रवृद्धसम्मतिः ।

> "आरूढाल्लाभभवनं ग्रहः पश्येत् तु न व्ययम् ।
> यस्य जन्मनि सोऽपि स्यात् प्रबलो धनवानपि ॥

द्रष्टृग्रहाणां बाहुल्ये तथा द्रष्टरि तुङ्गगे।
सार्गले चापि तत्रापि बह्वर्गलसमागमे ॥
शुभग्रहार्गले तत्र तत्राप्युच्चग्रहार्गले।
सुखानि स्वामिना दृष्टे लग्नभाग्यधिपेन वा ॥
जातस्य पुंसः प्राबल्यं निर्दिशेदुत्तरोत्तरम्"–इति ॥१२॥

रवि, राहु, शुक्र पदसे एकादश में हों तो राजा के द्वारा लाभ हो और द्वादशमें हों तो राजा के द्वारा व्यय हो, चन्द्रमा की दृष्टि हो तो निश्चय करके राजा के द्वारा लाभ वा व्यय हो। इसी प्रकार लाभ व्यय और ग्रहों से भी जानना, बुध हो तो जाति से वा विवाद से, गुरु हो तो कर (टिकट) से मंगल शनि हो तो भाई प्रभृति से लाभ वा व्यय होता है ॥ ७—१२ ॥

अथ पदात् सप्तमफलमाह।

**लाभे राहुकेतुभ्यामुदररोगः ॥१३॥ तत्र केतुना झटिति ज्यानिलिङ्गानि ॥ १४ ॥ चन्द्रगुरुशुक्रेषु श्रीमन्तः ॥ १५ ॥ उच्चेन वा ॥ १६ ॥ स्वांशवदन्यत् प्रायेण ॥ १७ ॥**

पदात् सप्तमे राहुकेतुभ्यां स्थिताभ्यामुदररोगः स्यात्। तत्र द्वयोरेकराशिगतत्वाभावात् पृथक् पृथक् फलमूह्यम् ॥ तत्र पदाद्द्वितीये केतौ स्थिते झटिति ज्यानिलिङ्गानि वार्धक्य-चिह्नानि भवन्ति । यत् तु "स्वाम्यादिर्लाभपदानुवृत्त्या तत्र सप्तमेति" उक्तं तदसङ्गतम्। एवं चेत् तदा केतुना झटिति ज्यानिलिङ्गानि इत्येवं सूत्रं स्यात्। तथा चाग्रे चन्द्रगुरुशुक्रेषु

स्थितेषु धनवत्वयोगप्रतिपादनात् सप्तमे धनयोगाभावाच्चेति॥ पदाद्द्वितीये चन्द्रगुरुशुक्रेषु स्थितेषु श्रीमन्तः स्युः ॥ पदाद्-द्वितीये उच्चं गतेन शुभेन पापेन वा श्रीमन्त इत्यर्थः ।

अत्र वृद्धसम्मतिः ।

"आरूढात् षष्ठभे पापे चोरः स्याच्छुभवर्जिते ।
आरूढाद्वाऽपि सौम्ये तु सर्वदिश्यधिपो भवेत् ॥
सर्वज्ञस्तत्र जीवे स्यात् कविर्वादी च भार्गवे ।"

इति षष्ठभे द्वितीये वाऽपि द्वितीये च ॥ अन्यदत्रानुक्तं फलं स्वांशवत् कारकांशवज्ज्ञेयम् ॥ १३···१७ ॥

पद से ( लाभ ) सप्तममें राहु केतु हों तो उदर रोग होता है, द्वितीय में केतु हो तो शीघ्र वार्द्धक्य चिह्न होता है । पदसे ( रोग ) द्वितीय में चन्द्र, गुरु, शुक्र हों तो श्रीमान् हो, उच्चं-गत ग्रह हों तो भी श्रीमान् हो । शेष फल कारकांश के ऐसा ही पद से भी विचार करना ॥ १३–१७ ॥

**लाभपदे केन्द्रे त्रिकोणे वा श्रीमन्तः ॥ १८ ॥ अन्यथा दुःस्थे ॥ १९ ॥ केन्द्र त्रिकोणोपचयेषु द्वयोर्मैत्री ॥ २० ॥ रिपुरोग चिन्तासुवैरम् ॥ २१ ॥ पत्नीलाभयोर्दिष्ट्यानिराभासार्गलया ॥२२॥ शुभार्गलेधन समृद्धिः ॥ २३ ॥ जन्मकाल घटिकास्वेक दृष्टासुराजानः ॥२४॥**

लग्नपदराशितः सप्तम पद राशिः केन्द्रे वा त्रिकोणे भवेत्तदा जनाः श्रीमन्तः स्युः । लग्नपदराशितः सप्तमपद राशिः केन्द्र-त्रिकोणोपचयेषु षष्ठव्यतिरिक्तेषु भवेत्तदा स्त्री पुंसोर्मध्ये मैत्री

स्यात् । षष्ठाष्टम द्वादशेषु चेत्तदा निरन्तरं वैरं स्यात् । एवमेव लग्नपदात् तृतीय पञ्चमादि भावपद रशि वशात् । भ्रात्रोः पितृ पुत्रयोरन्ययोश्च मैत्री विचारः कार्यः । लग्नपदतत्सप्तमयोः प्रतिवन्धकरहितार्गलाचेत् तदा जनाः दिष्ट्याः श्रीमन्तः स्युः । शुभग्रह कृतार्गलाचेत्तदा धन समृद्धिः स्यात् अन्यथा धनवत्व-मात्रमेवस्यात् । जन्मलग्नकाल ( होरा ) लग्नघटिका लग्नानि समग्रहेणैकेनैव दृष्टानि तदा राजानो भवन्ति ।

घटिकालग्नानयनं तु वृद्धैरुक्तम् ।

"लग्नादेकघटी मात्रं याति लग्नं दिने दिने ।
परन्तु घटिकालग्नं निर्दिशेत् कालवित्तमः ॥"

पूर्वयुक्त्या घटिकालग्नमपि सूर्यादेव गणनीयमिति ॥१८-२४॥

लग्नके पदसे ( लाभ ) सप्तम भाव का पद केन्द्रत्रिकोण में हो तो मनुष्य श्रीमान् होता है ।

लग्नके पदसे सप्तम भाव का पद केन्द्र, त्रिकोण और षष्ठ को छोड़ उपचय में हो तो स्त्री पुरुषों में प्रेम होता है, षष्ठाष्टम-द्वादश में हो तो वैर होता है, इसी प्रकार तृतीय के पद के वश भाइयों में चतुर्थ के पद के वश माता पुत्र में मैत्री देखना तथा और कुटुम्बियों में भी इसी प्रकार मैत्री का विचार करना ।

लग्न के पद और उसके सप्तम में प्रतिवन्धक रहित अर्गला योग हो तो मनुष्य भाग्यवान् हो, शुभग्रहकृत अर्गला हो तो धन की वृद्धि होती है; पापग्रहकृत हो तो पूर्वसंचित धन मात्र रहता है ।

जन्म लग्न काल अर्थात् होरा लग्न और घटिका लग्न, ये तीनों किसी एक ही ग्रह से देखे जायँ, यानी जिन ग्रहों से लग्न देखा जाता हो वे ही ग्रह होरा लग्न और घटिका लग्नों को भी देखें तो राजा होता है ।

घटिका लग्न बनाने की विधि यह है कि इष्टकाल के घटी तुल्य राशि, पल के आधे के तुल्य अंशों को स्पष्टसूर्य में जोड़ देने से घटिका लग्न बनता है ॥ १८-२४ ॥

**एवमंशतो दृक्काणतश्च ॥ २५ ॥ पत्नीलाभयोश्च राश्यंशकदृक्काणैर्वा ॥ २६ ॥ तेष्वेकस्मिन् न्यूने न्यूनम् ॥ २७ ॥**

एवमंशतो दृक्काणतश्च राजयोग विचारः कार्यः। अर्थात् यथाजन्मकालघटिकासु एकदृष्टासु राजयोगस्तथैव तेषामंश भेदेन दृक्काण भेदेनापि विचारः कर्त्तव्यः । अर्थात् जन्मकाल घटिकासु नवांशरूप जन्मकाल घटीषुदृक्काणरूपजन्मकालघटिकासु चैकदृष्टासु राजानो भवन्ति । राश्यंशकदृक्काणैः पत्नीलाभयोर्लग्नसप्तमयोरेकग्रहदृष्टयो राजानो भवन्ति । राशिर्जन्मराशिः, अर्थाद्राशिकुण्डल्यां नवामांशकुण्डल्यां द्रेष्काणकुण्डल्यां च यानि लग्नानि यानि तत्सप्तमानि च तानि यद्येकग्रह दृष्टानि तदा राजानो भवन्ति । एवं षट् स्वपि एकदृष्ट्या दृष्टेषु राजयोगः पूर्णो न्यूनेषु न्यूनः ॥ तेषु जन्मकालघटिका लग्नेषु-राश्यंशदृक्काणादिकेषु चैकग्रहदृष्ट्या न्यूनेषु न्यूनं राजयोगः स्यादिति ॥२५-२७॥

जन्म लग्न, होरा लग्न और घटिका लग्नों के नवांश राशि अथवा द्रेष्काण राशि इसी प्रकार समग्रह से देखे जाते हों तोभी राजयोग होता है ।

लग्न सप्तम के राशि अंश और द्रेष्काण छहों पदार्थ एक ही ग्रह से देखे जायँ तो राजा होता है, इसमें जैसे जैसे कम ग्रहों की दृष्टि होती जाय वैसे वैसे हीन राजयोग जानना ॥२५-२७॥

तथा च वृद्धाः—

"विलग्नघटिकालग्नहोरालग्नानि पश्यति।
उच्चग्रहे राज योगो लग्नद्वयमथापि वा॥
राशेर्दृक्काणतोंऽशाच्च राशेरंशादथापि वा।
यद्वा राशि दृकाणाभ्यां लग्नद्रष्टा तु योगदः॥
प्रायेणायं जातकेषु प्रभूणामेव दृश्यते।"

अन्यच्च—

"जन्मकालघटीलग्नेष्वेकेनैवेक्षितेषुतु ।
उच्चारूढ़ेतु संप्राप्ते चन्द्राक्रान्ते विशेषतः॥
क्रान्ते वा गुरुशुक्राभ्यां केनाप्युच्चग्रहेण वा।
दुष्टार्गलग्रहाभावे राजयोगो न संशयः॥"

अन्यच्च—

"निशार्धाच्च दिनार्धाच्च परं सार्धद्विनाडिका।
शुभा तदुद्भवो राजा धनी वा तत्समोऽपि वा॥" इति।

पदादन्यदपि फलं वृद्धैरुक्तम्—

"शुभारूढ़े तत्र चन्द्रे धने देवगुरुस्तथा।
उच्चदृष्टग्रहे वाऽर्थेऽप्युच्चखेटेऽथवा तथा॥"

अन्यच्च—

"शुभारूढ़े तत्र चन्द्रे धने देवगुरौ स्थिते।
आरूढ़ेऽस्मिञ्छुक्रदृष्टे वाहनाथो भवेन्नरः॥"
तथा पूर्वोक्तयोगा जन्मलग्नादपि विचारणीयाः।

तथा च।

"आरूढ़योगाः सर्वेऽपि जन्मलग्नेऽपि ते स्मृताः।
जन्मलग्नाच्छुभेऽस्तस्थे तृतीये पापखेचरे॥
चतुर्थेऽपि शुभे प्राप्ते राजा वा तत्समोऽपि वा।

चतुर्थकामार्थलाभपतिदृष्टे च लग्नभे ।
आरूढलाभे कविना दृष्टेऽप्यारूढभे शुभे ॥"

राजा वा तत्समोऽपि वेति पूर्वेणान्वयः ।

"उच्चो वा हरिणाङ्को वा जीवो वा शुक्र एव वा ।
एको वली धनगतः श्रियं दिशति देहिनाम् ॥"

लग्नाद्वा पदाद्वा धनगत इति वेदितव्यम् । अत्र धनपद द्वितीयं नवमं च वोधयति—

"लग्नं पश्यन्ति ये खेटास्ते सर्वे शुभदायिनः ।
नीचखेटोऽपि लग्नं चेत् पश्येद्राजा प्रकीर्त्तितः ॥"
राजयोगो जन्मलग्नं पश्येदुच्चग्रहो यदि ।
षष्ठाष्टमगते नीचे लग्नं पश्यति वा तथा ॥
षष्ठाष्टमभवौ खेटौ शुभौ यौ केचनाश्रितौ ।
पश्यतो जन्मलग्नं चेद्राजयोग उदाहृतः ॥
त्रिकोणकेन्द्रस्थखेटदृष्टिर्लग्ने शुभप्रदा ।
चतुर्थनवमस्थस्य दृष्टिरत्युत्तमा स्मृता ॥
चतुर्थे शुभखेटश्चेद्राजयोग उदाहृतः ।
बलवान् स्याच्चतुर्थोपि चरादिषुयथोत्तरम् ॥
उच्चाद्युक्तो ग्रहःकश्चिल्लाभस्थो वा चतुर्थगः ।
धनस्थितो वा लग्नं चेत् पश्येद्वाहनकारकः ॥"

उच्चाद्युक्तग्रह उच्चो वा हरिणाङ्को वेत्यादिनिरुक्तग्रहः ।

"राजयोगाद्यभावे तु धनाधनविनिर्णयः ।
शुभपापदृशा लग्ने ततः केन्द्रादियोगतः ॥"

राजयोगाभावे लग्ने शुभदृष्ट्या धनं पापदृष्ट्या धनराहित्यम् केन्द्रे शुभे धनं पापे धनाभाव इत्यादिप्रकारेणोह्यम् ।

"यस्य लग्नांशके सौम्यः प्राबल्यं तस्य निश्चितम् ।

लग्नांशकेन्द्रेषु शुभे निग्रहानुग्रहक्षमः ।
लग्नत्रिकोणे द्वौ पापौ मिलितौ यदि पश्यतः ॥
जन्मलग्नं विशेषेण योगो दारिद्रनामकः ॥
एवं धनेऽपि द्रष्टव्यं महादारिद्रकारकम् ।

त्रिकोणवदेव धने आरूढाद्द्वितीये द्वौ पापौ मिलितौ सन्तः पश्यतश्चेत् तदा महादारिद्रयोगः स्यात् ।

"पापारूढे पापखेटे तत्रस्थे व्ययगे रवौ ।
चन्द्रे राहौ च तद्दृष्टे व्यये निर्धन एव सः ॥
अष्टमक्षेत्रपतिना दृष्टेऽन्येनावलोकिते ।
पापारूढे तथा लग्ने स्थिरोभयचराश्रिते ॥
नीचग्रहेण संदृष्टे पापारूढे तथा ग्रहे ।
अन्यैर्न वीक्षिते मिश्रैर्योगो मिश्रं वदेद्बुधः ॥
ऐश्वर्यं स्याच्छुभारूढे पापारूढे दरिद्रता ।
तारतम्यविधिं ज्ञात्वा फलं ब्रूयाद्विचक्षणः ॥
चन्द्रारूढवशात् सर्वं लग्नारूढवशात् ततः ।
दारिद्रराजयोगादीन् सर्वान् योगान् प्रचिन्तयेत् ॥
चन्द्रारूढवशात् प्रश्नं निर्णीयाद्बुद्धिमान्नरः ।
भावग्रहात् कारकाच्च मिश्रचिन्ताफलं विदुः ॥
केचित् तत्तद्ग्रहा रूढं तत्तद्भावाधिपात् क्रमात् ।
त्रिकोणाष्टमगे पापे युद्धपापभयामयाः ॥"

अस्यार्थः । यद्राशेस्त्रिकोणाष्टमगे पापे तद्राशिदशायां युद्धं स्यात् । पापकर्म स्यात् । भयं स्यात्, आमयो दीर्घरोगश्च स्यादिति ।

"तृतीयषष्ठगे पापे प्रावल्यं शत्रुनिग्रहः ।
शुभेषु विपरीतं स्यात् प्राग्वल्लाभोऽव्ययस्थिते

जयप्रदः शुभो राशिरशुभोऽत्राजयप्रदः ।
शुभराशिगते पापे कष्टं पूर्वं ततः शुभम् ॥
पापराशिगते सौम्ये शुभं पूर्वं ततोऽशुभम् ।
शत्रुराशौ मित्रनाशो मित्रराशौ धनागमः ॥
उच्चराशौ भवेत् कीर्त्तिर्नीचे नीचत्वमाप्नुयात् ।
एतद्राशिफलं चिन्त्यं प्राधान्यात् पाकभोगयोः ॥
द्वितीये पञ्चमे सौम्ये राजप्रीतिर्जयो ध्रुवम् ।
पापे तृतीयषष्ठे च शत्रुनिग्रहणं जयः ॥
चतुर्थे तु शुभे सौख्यमारोग्यंत्वष्टमे शुभे ।
धर्मवृद्धिर्गुरुजनात् कष्टं च नवमे शुभे ॥
विपरीते विपर्यासो मिश्रे मिश्रं प्रकीर्त्तितम् ।
पाके भोगे च पापाढ्ये देहपीडा मनोव्यथा ॥
सप्तमे पाकभोगाभ्यां पापे दारार्त्तिरीरिता ।
चतुर्थे स्थानहानिः स्यात् पञ्चमेऽपत्यपीडनम् ॥
दशमे कीर्त्तिहानिः स्यान्नवमेऽपत्यपीडनम् ।
उक्तस्थान गते सौम्ये तत्तत्सौख्यं विनिर्दिशेत् ॥
केन्द्रस्थाने गते सौम्ये लाभः शत्रुजयप्रदः ।
विपरीते विपर्यासो मिश्रे मिश्रं प्रकीर्त्तितम् ॥
जन्मकालग्रहस्थित्या गोचरस्थग्रहैरपि ।
विचारितैः प्रवक्तव्यं तत्तद्राशिदशाफलम् ॥

अर्थाद्दशाप्रदराशेर्द्वितीयतृतीयादिस्थानस्थित्यातत्तद्राशि दशायां सुखदुःखादिलक्षणं फलं समुन्नेयमिति ।

अन्यच्च—

"यश्च राशिः शुभाक्रान्तो यस्य पश्चाच्छुभग्रहः ।
तद्दशा शुभदा प्रोक्ता विपरीते विपर्ययः ॥
त्रिकोणरन्ध्ररिष्फस्थैः शुभपापैः शुभाशुभम्" ।

तत्तद्दशाप्रदराशिभिरिति विवेचनीयम्।

अन्यच्च विशेषो वृद्धैरभिहितः—

"मेषकर्कतुलानक्रराशीनां च यथाक्रमम्।
बाधास्थानानि संप्रोक्ताः कुम्भगोसिंहवृश्चिकाः" ॥

अर्थाच्चराणां राशीनामेकादशो राशिर्बाधास्थानं भवति। एवं स्थिरे नवमो द्विस्वभावे सप्तमो राशिर्बाधास्थानम् ॥

"पाकेश्वरान्तराशेश्च बाधास्थाने शुभेतरे।
स्थिते सति महारोगो बन्धनं द्रव्यनाशनम् ॥
उच्चस्वर्क्षग्रहे तस्मिञ्छुभे सौख्यं धनागमः।
तच्छून्यं चेदसौख्यं स्यात् तद्दशा न फलप्रदा" ॥

अत्र पाकेश्वरो राशिर्दशाप्रदराशि दशापरिपाकहेतुत्वेन दशेश्वरत्वसंभवात्।

बाधकव्ययषष्ठाष्टराहुभुक्तौ महद्भयम्।
प्रस्थानं बन्धनं चैव व्याधिपीडार्थनाशनम् ॥
पाकेश्वरत्रिकोणे तु राहुकेतु स्थितौ यदि।
तत्पाके बन्धनप्राप्तिराहुः पीडा रिपोर्भयम् ॥
रव्यारराहुशनयो भुक्तिराशौ स्थिता यदि।
तद्राशिभुक्तौ पतनं राजकोपो महद्भयम् ॥
भुक्तिराशित्रिकोणे तु नीचखेटस्थितौ यदि।
तद्राशौ वा नीचयुते ह्यपमृत्युभयं वदेत् ॥
भुक्तिराशौ स्वतुङ्गस्थे त्रिकोणे वा स्वतुङ्गभे।
यदा भुक्तिदशा प्राप्ता तदा सौख्यं लभेन्नरः ॥
नगरग्रामनाथत्वं पुत्रलाभधनागमम्।
कल्याणं भोगभाग्यं च सेनापत्यं महोन्नतम् ॥
पाकेश्वरो जीवदृष्टः शुभराशौ स्थितो यदि।
तद्दशायां धनप्राप्तिर्मङ्गलं पुत्रसंभवः ॥"

फलादेशाय ग्रहाणां शत्रुराशयो वृद्धेनाभिहिताः ।

"सितासिताश्च युग्माश्च सूर्यस्य रिपुराशयः ।
कौर्पितौलिघटाश्चेन्दोर्भौमस्य रिपुराशयः ॥
घटमीननृयुक्तौलिकन्या ज्ञस्य ततः परम् ।
कर्कमीनालिकुम्भाश्च राशयो रिपवः स्मृताः ॥
मेषसिंहधनुः कौपिकर्कटाः शनिशत्रवः ।
वृषतौलिनृयुक् कन्याराशयो रिपवो गुरोः ॥
सिंहालिकर्कचापाश्च शुक्रस्य रिपुराशयः ।"

—इतिसुगमम् ।

"भुक्तिर्नवानां तुल्या स्याद्विभाज्या नवधा दशा ।
दशेशस्थितराशीस्थं तत्केन्द्रादिस्थितास्ततः ॥
विन्द्यात् क्रमेण भुक्तांशाँस्तद्वत् सूक्ष्मदशादिकम् ।"

अस्यार्थः—ग्रहाणां शास्त्रान्तरेष्वष्टोत्तरीविंशोत्तर्यादिरूपा दशा प्रसिद्धा। तत्र दशावर्षप्रमाणेनान्तर्दशादिकानामपि मानानि भवन्ति । प्रकृतशास्त्रेऽपि कारकदशा ग्रहाणां वक्ष्यमाणा तत्रान्तर्दशा विभागे न किञ्चिद्वैषम्यम् सर्वेषांसममेव नवधा विभागं कृत्वा नवानां ग्रहाणामन्तर्दशा कल्पनीया । तत्र दशेश्वरस्य प्रथमाऽन्तर्दशा ततो दशेशाश्रितराशिगतस्य ततस्तत्केन्द्रगतग्रहस्यततः पणफरस्थस्य तत आपोक्लिमस्थस्य । तत्र बलिनः पूर्वम् । बलसाम्येऽधिकवर्षवतः पूर्वमिति ।

अन्यच्च विशेषः ।

"ये राजयोगदा ये च शुभमध्यगता ग्रहाः ।
यस्माद्वा द्वित्रितुर्याः स्युः शुभाशुभफलप्रदाः ॥
तद्दशासु शुभं ब्रूयाद्राजयोगादिसम्भवम् ।
आरम्भे तत्रिकोणे तु सौम्येऽपि शुभमावहेत् ॥

गता शुभादशा मध्यं दशा सौम्यस्य शोभना।
शुभो यस्य त्रिकोणस्थस्तद्दशाऽपि शुभप्रदा॥
शुभराशौ शुभारम्भे दशा स्यादतिशोभना।
नीचादौ तद्दशादन्ते भवेद्भाग्यविपर्ययः॥"

अयमर्थः—दशारम्भराशावन्तराशौ च नीचखेटे सति दशारम्भान्त राशीशे वा नीचे सति दशारम्भात् त्रिकोणे वा नीचगे ग्रहे सति त्रिकोणेशे वा नीचगे सति विपरीतं भाग्यस्य भवतीत्यर्थः।

"राहोः केतोश्च कुम्भादिवृश्चिकादि चतुष्टयम्।
शुभं तत्र समारम्भे तद्दशायां शुभं भवेत्॥"

राहुकेतुदशासमाप्तिरपि कुम्भादिचतुष्टये वृश्चिकादिचतुष्टये च शुभावहा।

"यद्दशायां शुभं ब्रूयात् स चेन्मारक संस्थितः।
यस्मिन् राशौ दशान्तः स्यात् तस्मिन् दृष्टे युतेऽपि वा॥
शुक्रेण विधुना वा स्याद्राजकोपाद् धनक्षयः।
दशान्तश्चेदरिक्षेत्रे राहुदृष्टे युतेऽपि वा॥
राहोर्दशान्ते सर्वस्वनाशो मरणबन्धने।
देशान्निर्वासनं वा स्यात् कष्टं वा महदश्नुते॥
तत्त्रिकोणगते पापे निश्चयं दुःखमादिशेत्।
एवं शुभाशुभं सर्वं निश्चित्य प्रवदेद्बुधः॥
दशारम्भो दशान्तो वा मारके चेन्न शोभनन्।
तस्मिन्नेव च राहौ चेन्निरोधो द्रव्यनाशनम्॥"

तस्मिन् मारके इत्यर्थः।

"यत्र क्वापि च भे राहौ दशारम्भोऽवसानकम्।
गृहभ्रंशः समुद्दिष्टो धने राहुर्धनार्त्तिकृत्॥

चन्द्रशुक्रौ द्वादशे चेद्राजकोपो महद्भयम् ।
भौमकेतू तत्र यदि बाधाऽग्नेर्महती भवेत्" ॥
आरूढात्पष्ठभे पापे चोरः स्याच्छुभवर्जिते ।
आरूढा द्वापि सौम्येतु सर्व दिश्यधियो भवेत् ॥
सर्वज्ञस्तत्र जीवेस्यात्कविर्वादी च भार्गवे ।

षष्ठ भे द्वीतीये-वापिद्वितीये । दशारम्भसमाप्तिराशेर्द्वादशे चेदिदं फलं वेदितव्यमित्यलम् ॥२७॥

**शुक्रचन्द्रयोर्मिथो दृष्टयोः सिंहस्थयोर्वा यानवन्तः ॥२८॥**

**शुक्रकुजकेतुषु वैतानिकाः ॥ २९ ॥**

शुक्रचन्द्रयोर्मिथो दृष्टयोः परस्परं दृष्टयोर्यत्र कुत्रापि गतयोर्वा सिंहस्थयोः पदात् तृतीयस्थयोः शुक्राच्चन्द्रे तृतीयगे वा चन्द्राच्छुके तृतीयगेयानवन्त स्युः ।

तथा चोक्तं वृद्धैः—

"चन्द्रःकविं कविश्चन्द्रं पश्यत्यपि तृतीयगे ।
शुक्राच्चन्द्रे ततः शुक्रे तृतीये वाहनार्थवान्" ॥ २८ ॥
अत्र द्वितीये वाहनर्थवानित्यपि पाठः ॥

"शुक्रकुजकेतुषु यत्र कुत्रापि गतेषु परस्परं दृष्टिमत्सु वैतानिका वितानादिराजचिह्नवन्तो भवन्तीत्यर्थः ॥ २९ ॥

चन्द्रमा और शुक्र परस्पर देखते हों वा लग्न से (सिंह) तृतीय में हों तो यानवान हो-शुक्र मंगल और केतु परस्पर देखें वा लग्न से तृतीय में हों तो वितानादि राज चिह्न युक्त हो ॥२८-२९॥

**स्वभाग्यदारमातृ भावसमेषु शुभेषु राजानः ॥३०॥**

**कर्मदासयोः पापयोश्च ॥ ३१ ॥**

आत्मकारकाद्भाग्ये द्वितीये दारे चतुर्थे मातरि पञ्चमे एतेषु

समेषु शुभेषु भावतुल्येषु शुभेषु राजनो भवन्ति । एवं पुत्रादिकारकवशात् पुत्रादीनामपि राजयोगो वाच्यः ॥ आत्माकारकात्कर्मदासयोस्तृतीयषष्ठयोः समयोः पापयोश्च सतो राजानो भवन्ति ॥ ३०-३१ ॥

आत्माकारक से (भाग्य) द्वितीय (दार) चतुर्थ और (मातृ) पञ्चम भाव में इन् भावों के स्फुट के तुल्य ही शुभ ग्रह हों अर्थात् भाव स्फुट और ग्रह स्फुट तुल्य हो तो राजा हो । इसी प्रकार तृतीय और षष्ठमे पापग्रह हों तो भी राजा हो ॥३०-३१॥

**पितृलाभाधिपाच्चैवम् ॥३२॥ मिश्रे समाः ॥३३॥ दरिद्रा विपरीते ॥ ३४ ॥**

लग्नाधिपात् सप्तमाधिपाच्चाप्येवमेव विचारः कार्यः । अर्थाल्लग्नाधिपात् सप्तमाधिपाच्चापि भाग्यदारमातृभावेषु समेषु शुभेषु तथा कर्मदासयोः पापयोश्च समयोःसतोराजानो भवन्ति । अत्र लग्नशब्देन जन्मलग्नस्य पदलग्नस्यापि ग्रहणम् । मिश्रग्रहे स्थिते अर्थात् शुभ पापमिलिते स्थाने समाः राजसमा भवन्तीत्यर्थः । विपरीते शुभस्थाने पापाः पापस्थाने शुभाश्चेत् स्युस्तदा दरिद्रा भवन्ति ॥ ३२...३४ ॥

(पितृ)लग्न (लाभ) सप्तम के स्वामी से भी इसी प्रकार विचार करना, मिश्र ग्रह तुल्य हों तो सम हो-अर्थात् धनवान् हो शुभ ग्रह के स्थान में पाप ग्रह और पाप ग्रह के स्थान में शुभ ग्रह हों तो दरिद्र हो । ३२-३४ ॥

**मातरि गुरौ शुक्रे चन्द्रे वा राजकीयाः ॥ ३५ ॥**
**कर्मणि दासे वा पापे सेनान्यः ॥३६॥**

पितृलाभाधिपात् कारकाच्च मातरि पञ्चमे गुरौ वा शुक्रे

वा चन्द्रे स्थिते राजाधिकारिणो भवन्ति॥ लग्नाधिपात् सप्तमाधिपात् कारकाच्च कर्मणि तृतीये वा दासे षष्ठे भावे पापे स्थिते सेनान्यः सेनापतयो भवन्ति॥३५–३६॥

लग्न से वा पद से वा कारक से वा इनके लग्नेश सप्तमेश से (मातरि) पंचम स्थान में बृहस्पति शुक्र वा चन्द्रमा हों तो राजकार्य में नियुक्त हो (कर्मणि) तृतीय (दास) षष्ठ में पाप ग्रह हों तो सेनापति हो॥३५-३६॥

**स्वपितृभ्यां कर्मदासस्थदृष्ट्या तदीशदृष्ट्या मातृनाथदृष्ट्या च धीमन्तः॥३७॥**

स्वपितृभ्यां कारकजन्मलग्नाभ्यां कर्मदासस्थतृतीयषष्ठस्थग्रहदृष्ट्या कारके लग्ने चेत्यर्थः वा तदीशदृष्ट्या पञ्चमेशदृष्ट्या च धीमन्तो भवन्तीत्यर्थः॥३७॥

कारक से वा लग्न से जो ग्रह (कर्म) तृतीय वा (दास) षष्ठ में हो वह कारक वा लग्न को यथा क्रम देखता हो वा इनके स्वामी इनको देखते हों वा उनका (मातृ नाथ) पञ्चमेश देखता हो तो मनुष्य बुद्धिमान होता है॥३७॥

**दारेशदृष्ट्या सुखिनः॥ ३८॥ रोगेशदृष्ट्या दरिद्राः॥ ३९॥ रिपुनाथदृष्ट्या व्ययशीलाः॥ ४०॥ स्वामिदृष्ट्या प्रबलाः॥ ४१॥**

कारकलग्नाभ्यां कारकलग्नयोरुपरि दारेशचतुर्थेशदृष्ट्या नराः सुखिनो भवन्ति॥ कारकलग्नाभ्यां रोगेशस्याष्टमेशस्य तयोरुपरि दृष्ट्या दरिद्रा भवन्ति॥ कारकलग्नाभ्यां द्वादशेशदृष्ट्या व्ययाधिक्यकारिणो भवन्ति॥ कारके कारकेशदृष्ट्या लग्ने लग्नेशदृष्ट्या प्रबला बलवन्तो भवन्ति॥३८...४१॥

(दारेश) चतुर्थांश देखता हो तो सुखी हो (रोगेश) अष्टमेश देखे तो दरिद्र हो द्वादशेश देखे तो खर्च करने वाला हो अपना अपना स्वामी देखे तो शरीर से बलवान हो ॥३८-४१॥

**पश्चाद्रिपुभाग्ययोर्ग्रहसाम्ये बन्धः कोणयो रिपु-जाययोः कीटयुग्मयोर्दाररिष्फयोश्च ॥४२॥**

**एवमृक्षाणां तदीशानां च शुभसम्बन्धे निरोध मात्रं पापसम्बन्धाच्छृङ्खलाप्रहारादयः ॥४३॥**

पश्चाल्लग्नात् कारकलग्नाच्च रिपुभाग्ययोर्द्वितीयद्वादशयोः कोणयोर्नवमपञ्चमयो रिपुजाययोर्द्वादशषष्ठयोः कीटयुग्मयोर्लाभतृतीययोर्दाररिष्फयोश्चतुर्थदशमयोर्ग्रहसाम्ये सति बन्धः स्यात्। एवं प्रोक्तानां द्विर्द्वादशाद्यृक्षाणां तदीशानां च शुभ-सम्बन्धे सति कारागृहे निरोधमात्रमेव न तु पीडादिः पाप सम्बन्धाच्छृङ्खलाप्रहारादयोऽपि भवन्ति ॥४२-४३॥

(पश्चात्) लग्न से (रिपु) द्वितीय (भाग्य) द्वादश में, पञ्चम नवम में, (रिपु रोगयोः) षष्ठ द्वादशमें, (कीटयुग्मयोः) तृतीय एकादश में, वा (रिपु जाययोः) चतुर्थ दशम में ग्रह की तुल्यता हो तो बन्धन हो इन में शुभ सम्बन्ध हो तो निरोध मात्र हो और पाप सम्बन्ध हो तो बेड़ी पड़े और दण्ड प्रहार भी हो ॥४२-४३॥

**शुक्राद्गौणपदस्थो राहुः सूर्यदृष्टो नेत्रहा ॥ ४४ ॥**

**स्वदारगयोःशुक्रचन्द्रयोरातोद्यं राजचिह्नानि च ॥४५॥**

शुक्राल्लग्नाद्गौणपदस्थः पञ्चमपदस्थो राहुः सूर्यदृष्टो नेत्रहा नेत्रनाशकरः ॥ आत्मकारकाद्दारगयोश्चतुर्थस्थयोः शुक्रचन्द्रयोः

सतोरातोद्यं वाद्यविशेषः राजचिह्नानि छत्रचामरादीनि च भवन्तीति ॥ ४४-४५ ॥

लग्न से पञ्चम भाव के पद में राहु हो सूर्य देखता हो तो नेत्र का विकार करता है ॥ आत्मकारक से चतुर्थ में शुक्र चन्द्रमा हो तो नगारा इत्यादि राजचिह्न हो ॥ ४४-४५ ॥

## इति जैमिनिसूत्रे प्रथमाध्यायस्य तृतीयः पादः।

---

**उपपदं पदं पित्रनुचरात् ॥ १ ॥**

**तत्र पापस्य पापयोगे प्रव्रज्या दारनाशो वा ॥२॥**

अथोपपदमालम्ब्य फलं दर्शयति। तत्रादावुपपदं निरूपयति। पित्रनुचरात् पदमुपपदम् तत्र पितृ लग्नमनुचरं द्वितीयं यस्य इत्यनेन द्वादशभावस्य पदमुपपदमितिनीलकण्ठमतम्, अथ पितृलग्नं तस्यानुचरो द्वितीयभावः तस्य यत् पदं तल्लग्नस्योपपदमित्यप्यर्थः स्वामिनाऽभिहितः वस्तुतस्तु द्वितीयभावाद्धनविचारस्य स्त्रीविचारस्य च शास्त्रान्तरप्रसिद्धत्वाद्द्वितीयभावस्य पदवशेनापि स्त्रीविचारः समुचितः। यत् तु केश्चित् पित्र्यानुचरादिति पदं स्वीकृत्य सप्तमस्य पदमुपपदमित्यभिहितं तदपि युक्तम्। वास्तविकं तु लग्ने विषमे द्वितीयस्य पदमुपपदम् लग्ने समे द्वादशस्य पद मुपपदम् ॥ तत्रोपपदे पापस्य राशौ पापयोगे वा प्रव्रज्या सन्यासः स्त्रीनाशो वा स्यात्, तत्रेति पदेनाधिकारप्राप्तत्वादुपपदस्यैव ग्रहणं न तद्द्वितीयस्य ॥

यहाँ से उपपद का अधिकार प्रारम्भ होता है लग्न से द्वादशभाव का पद उपपद होता है यह नीलकण्ठ का मत है,

लग्न से द्वितीय भाव का पद उपपद होता है यह स्वामी टीका-कार का मत है। "पित्र्यानुचरात्" ऐसा पद मान कर किसी ने सप्तम भाव के पद को उपपद कहा है, परन्तु उपपद के वश इस प्रकरण में स्त्री और धन का विचार किया गया है द्वितीय भाव से धन तथा स्त्री का विचार शास्त्र प्रसिद्ध है इस कारण द्वितीय भाव के पद को ही उपपद कहना युक्त है इस ग्रन्थ में विषम राशि में क्रम और सम राशि में उत्क्रम गणना प्रसिद्ध है इस कारण यदि लग्न विषम हो तो द्वितीय भाव के पद का नाम उपपद है, लग्न सम हो तो द्वादशभाव के पद का नाम उपपद है। उपपदराशि पापग्रह का हो वा पाप संयुक्त हो तो प्रव्रज्या हो वा स्त्री का नाश होता है॥ १-२॥

**नात्र रविः पापः ॥३॥ शुभदृग्योगान्न ॥ ४ ॥**

अत्रप्रकरणे रविः सूर्यो न पापः। तेन सिंहराशावुपपदे सूर्ये स्थिते इदं फलं न भवति॥ शुभग्रहस्य दृग्योगादिदं फलं न भवति ॥ ३-४ ॥

इस प्रकरण में रवि पापग्रह नहीं है अर्थात् उपपद में सिंहराशि हो वा सूर्य हो तो प्रव्रज्या या दारनाश नहीं होता है, तथा शुभ ग्रह के योग या दृष्टि से भी नहीं होता है, ॥ ३-४ ॥

**नीचे दारनाशः ॥५॥ उच्चे बहुदारः ॥६॥ युग्मे च ॥७॥ तत्र स्वामियुक्ते स्वर्क्षे वा तद्धेतावुत्तरायुषि निर्दारः ॥८॥**

उपपदे नीचं गते ग्रहे दारनाशः स्यात् उच्चं गते पुरुषो बहुदारः स्यात् युग्मे मिथुनराशौ सति बहुदारः स्यात् तत्रोपपदे स्वामिना युक्ते वाऽन्यस्मिन्स्वराशौ तद्धेतौ तत्स्वामिनि स्थिते

उत्तरायुषि निर्दारो दाररहितः स्यात। अत्रहेतु शब्दात्स्त्रीकारकोपि गृह्यते ॥ ५-८ ॥

उपपद में नीचगत ग्रह हों तो स्त्रीनाश होता है उच्चंगत ग्रह हो तो वहुत स्त्री होती है यदि मिथुनराशि ( युग्म ) उपपद में हो तो भी वहुत स्त्री होती है। उपपदेश उपद में ही हो वा अपने दूसरे राशि में हो तो आधी अवस्था के वाद स्त्री का नाश होता है ॥ ५-८ ॥

**उच्चेतस्मिन्नुत्तमकुलाद्दारलाभः ॥ ६ ॥ नीचे विपर्ययः ॥ १० ॥ शुभसम्बन्धात् सुन्दरी ॥ ११ ॥**

तस्मिन्नुपपदेशे तत्कारके वा उच्चंगते उत्तमकुलाद्दारलाभः॥ नीचं गते उपपदेशे तत्कारके वा विपर्ययो नीचकुलात् स्त्रीलाभः उपपदे तत्कारके वा शुभवर्गदृग्योगादि सम्वन्धे सुन्दरी स्त्री भवति ॥ ९-११ ॥

उपपदेश वा स्त्री कारक ग्रह उच्च में हो तो उत्तम कुल से स्त्री मिले, नीच में हो तो स्त्री नीचकुल से मिले, शुभग्रह का योग दृष्टि इत्यादि सम्वन्ध हो तो स्त्री सुन्दरी हो ॥९-११॥

**राहुशनिभ्यामपवादात् त्यागो नाशो वा ॥१२॥ शुक्रकेतुभ्यां रक्तप्रदरः ॥ १३ ॥ अस्थिस्रावो वुधकेतुभ्याम् ॥१४॥ शनिरविराहुभिरस्थिज्वरः ॥१५॥ वुधकेतुभ्यां स्थौल्यम् ॥ १६॥ वुधक्षेत्रे मन्दाराभ्यां नासिकारोगः ॥१७॥ कुजक्षेत्रे च ॥१८॥ गुरुशनिभ्यां कर्णरोगो नरहका च ॥१६॥ गुरुराहुभ्यां दन्त-**

रोगः ॥२०॥ शनिराहुभ्यां कन्या तुलयोः पंगुर्वात-रोगो वा ॥२१॥ शुभदृग्योगान्न ॥२२॥

उपपद तदीश स्त्री कारकेषु शनिराहुभ्यां युक्तदृष्टेषु अपवादात् स्त्रियास्त्यागोनाशो वा स्यात्। उपपदे तत्कारके वा शुक्रकेतुभ्यां युक्ते रक्तप्रदररोगयुता स्त्री स्यात् एवमेव सर्वत्र। कन्या तुलयोः कुम्भमीनयोः। यत् तु कन्यातुलान्यतरग इति नीलकण्ठेनोक्तं तदसङ्गतम्। कुम्भमीनयोः पादाभावात् तत्रैव योगघटनसम्भवात् पूर्वप्रतिज्ञानुसाराच्चेति ॥ १३-२१ ॥ उपपदे च शुभयोगे शुभदृष्टौ वा पूर्वोक्त दोषा न स्युः ॥ २२ ॥

उपपद और तदीश के साथ शनि राहु का सम्बन्ध हो तो अपवाद के कारण स्त्रीका त्याग वा नाश हो। उपपद में शुक्रकेतु हों तो स्त्री को रक्त प्रदर का रोग हो वुधकेतु हों तो अस्थि स्राव हो, शनि रवि राहु का सम्बन्ध हो तो अस्थि गत ज्वर हो, वुधकेतु का सम्बन्ध हो तो स्थूलता स्त्री को हो, मिथुन कन्या में शनि मंगल उपपद में हों तो नासिका रोग होता है। मंगल के राशि में हों तो भी नासिका रोग हो, गुरु शनि का सम्बन्ध हो तो कर्ण रोग वा नरहका रोग हो, उपपद में शनि राहु कुंभ या मीन राशि में हों तो पंगुरोग वा वातरोग स्त्री को होता है। यहाँ कन्या तुला का अर्थ नीलकण्ठ ने प्रसिद्ध राशि संज्ञावश कन्या तुला ही किया है परन्तु यह अर्थ ठीक नहीं है क्योंकि इस ग्रन्थ के नियम के अनुसार कन्या का अर्थ कुंभ और तुला का अर्थ मीन होता है तथा कुंभ मीन दोनों ही अपद राशि हैं अतः इन्हीं में पंगु का होना संभवित भी होता है। शुभग्रह के दृष्टियोग से अशुभ फल नष्ट हो जाता है ॥ १२-२२ ॥

सप्तांशग्रहेभ्यश्चैवम् ॥ २३ ॥

उपपदाद्यः सप्तमो भावस्तस्मात् तदंशात् तत्स्वामिनोश्च एवं विचारः कार्यः। अष्टमस्थानतोपिपत्न्यरिष्टविचारात्सप्तमादितो द्वितीयेपि पूर्ववद्विचारः कर्तव्यः उक्तंच वृद्धेन ।

"सप्तमांशाद्द्वितीयस्थेप्येयं फलमुदाहृतम् ।"

बुधशनिशुक्रेष्वनपत्यः ॥२४॥ पुत्रेषु रविराहुगुरुभिर्बहुपुत्रः ॥ २५ ॥ चन्द्रेणैकपुत्रः ॥ २६ ॥ मिश्रे विलम्बात् पुत्रः ॥ २७ ॥ कुजशनिभ्यां दत्तपुत्रः॥ २८॥ ओजे बहुपुत्रः ॥ २९ ॥ युग्मेऽल्पप्रजः ॥ ३० ॥

उपपदात् लग्नकारक पदाच्चनवमेषु बुधशनिशुक्रेषु स्थितेषु अनपत्योऽपत्यरहितो भवति ॥ उपपदात् सप्तमांशग्रहेभ्यो नवमेषु रविराहुगुरुभिर्बहुपुत्रः ॥ सप्तमांशग्रहेभ्यो नवमे चन्द्रेणैकपुत्रो भवति ॥ मिश्रे मिश्रग्रहे बहुपुत्रानपत्यकारके ग्रहे मिलिते सति विलम्बात् पुत्रः । परन्त्वत्र तयोर्बलविचारात् फलं चिन्त्यम् ॥ (सप्तमांशग्रहेभ्यो नवमे विषमराशौ बहुपुत्रः स्यात् ॥ युग्मे समराशावल्पप्रजोऽल्पसन्ततिः स्यात् ॥२४...३०॥

गृहक्रमात् कुक्षितदीशपञ्चमांशग्रहेभ्यश्चैवम् ॥३१॥

गृहक्रमाज्जन्मलग्नक्रमाद्यथा भावानां विचारः क्रियते तथैव कुक्षिशब्देन प्रकरणपठितोपपदस्य ग्रहणम् । तदीश उपपदेश ताभ्यां तत्पञ्चमांशग्रहेभ्यश्चैवं विचारः कार्यः । तथैतेषामंशेभ्यश्च विचारः कार्यः । अत्र येषां यत्र यत्र प्रयोजनं तेषां तत्र तत्रानुवृत्तिः कार्या । विशेष प्राञ्चैः ।

"कुम्भवृश्चिकवृषा हि ससिंहाः पञ्चमर्क्षपतिता इह लग्नात् ।
एकशो ददति चात्मसुतत्वं पुत्रशोकमथ ते ग्रहयुक्ताः" ॥३१॥

लग्न कारक और पदसे (पुत्र) नवमस्थान में बुधशनिशुक्र हों तो संतति हीनहो रविराहु और गुरु हों तो बहुत पुत्र हों, चंद्रमा हो तो एक पुत्र हो, इष्टानिष्ट दोनों मिले हुए ग्रह हों तो विलंब से पुत्र हो, मंगल और शनि हो तो दत्तक पुत्र हो, विषम राशि हो तो बहुत पुत्र हों, समराशि हो तो अल्प सन्तति हो, जैसे लग्न से द्वादश भावों में विचार किया जाता है वैसे कुक्षि उपपद उसका स्वामी पंचम नवम राशि और उसका नवांश इनके स्वामी से भी तत्तद्भाव सम्बन्धि फलों का विचार करना ॥२४-३१॥

**भ्रातृभ्यां शनिराहुभ्यां भ्रातृनाशः ॥३२॥ शुक्रेण व्यवहितगर्भनाशः ॥३३॥ पितृभावे शुक्रदृष्टेपि ॥३४॥ कुजगुरुचन्द्रबुधैर्बहुभ्रातरः ॥३५॥ शन्याराभ्यां दृष्टे यथास्वं भ्रातृनाशः ॥३६॥**

लग्न कारकाभ्यामुपपदोपपदेशाभ्यां तदंशाभ्यां च भ्रातृभ्यां तृतीयैकादशाभ्यां शनिराहुभ्यां भ्रातृनाशःस्यात्, तृतीये स्थिताभ्यां कनिष्ठस्य, एकादशे स्थिताभ्यां शनिराहुभ्यां ज्येष्ठस्य नाशः। कर्मादि भ्रातुर्व्ययादिज्येष्ठस्येत्युक्तत्वात् उपपदोपपदेशाभ्यां तदंशाभ्यां तृतीयैकादशान्यतरस्थेन शुक्रेण यथाक्रमं व्यवहितगर्भनाशः लग्नादष्टमभावे शुक्रदृष्टे सति तदाऽपि व्यवहित गर्भनाशः स्यात् उपपदोपपदेशाभ्यां तदंशाभ्यां च तृतीयैकादशगैः कुजगुरुचन्द्रबुधैर्यथाक्रमं बहुभ्रातरो भवन्ति शन्याराभ्यां दृष्टे उपपदोपपदेशाभ्यां तदंशाभ्यां च भ्रातृस्थाने यथास्वं यथाक्रमं भ्रातृनाशः। तृतीये दृष्टे कनिष्ठस्य एकादशेज्येष्ठस्य। यदा तु द्वौ भावौ ताभ्यां दृष्टौ द्वयोरपि नाशः स्यात् ॥३२-३६॥

कारक लग्न और पद से भ्रातृ स्थानों में शनि और राहु

हों तो भ्रातृनाश होता है, शुक्र हो तो व्यवहित गर्भ का नाश होता है, लग्न से अष्टम को शुक्र देखता हो तो भी व्यवहित गर्भ का नाश होता है । भ्रातृ स्थानों में कुज गुरु चन्द्र और बुध हों तो बहुत भाई होता है, शनि और मंगल भ्रातृ स्थानों को देखें तो यथा क्रम भ्रातृनाश कहना ॥३२-३६॥

**शनिना स्वमात्रशेषश्च ॥ ३७ ॥ केतौ भगिनी-बाहुल्यम् ॥ ३८ ॥**

उपपदोपपदेशाभ्यां तदंशाभ्यां च भ्रातृस्थाने शनिना दृष्टे स्वमात्रशेषः स्योदन्ये नश्यन्तीति उपपदोपपदेशाभ्यां तदंशाभ्यां च तृतीयैकादशयोः केतुयोगे सति यथाक्रमं भगिनीबाहुल्यं स्यात् ॥३७-३८॥

भ्रातृ स्थानों को शनि देखे तो वही शेष रह जाय शनि योग से भी यही फल जानना । केतु हो तो अधिक बहिन होती है ॥३७-३८॥

**लाभेशाद्भाग्यभे राहौ दंष्ट्रावान् ॥ ३९ ॥ केतौ स्तब्धवाक् ॥४०॥ मन्दे कुरूपः ॥ ४१ ॥ स्वांशवशाद्गौरनीलपीतादिवर्णाः ॥ ४२ ॥ अमात्यानुचराद्देवताभक्तिः ॥ ४२ ॥**

उपपदसप्तमेशाल्लग्नसप्तमेशाद्वा भाग्यभे द्वितीये राहौ सति दंष्ट्रावान् स्यात् । उक्तं च वृद्धेन ।

"सप्तमेशाद्द्वितीयस्थे राहौ मूकः खले स्थिते ।
अदन्तोऽधिकदन्तो वा दंष्ट्रायुक्तोऽथ वा भवेत् ॥
पवनव्याधिमान् केतौ यदा स्यादस्फुटोक्तिमान् ।
तत्र मिश्रग्रहैर्योगे मिश्रं फलमुदाहृतम्" ॥ ३९ ॥

सप्तमेशाद्द्वितीये केतौ सति स्तब्धवाक् भवति ॥ उपपद-सप्तमेशाद्द्वितीये शनौ कुरूपः स्यात् ॥ स्वांशवशादात्मकार-कांशवशाच्छास्त्रान्तरप्रसिद्धाः पुरुषस्य गौरनीलादयोवर्णा ग्राह्याः । एवं तत्तत्कारकवशात् तेषां वर्णा वाच्या ॥ अमात्यानु-चरादर्थादमात्यकारकस्य योऽनुचरो भ्रातृकारकः तस्माद्देवता-भक्तिर्विचार्या, तस्य शुभत्वे शुभदेवतायां पापत्वे क्रूरदेवतायां भक्तिः, उच्चादिस्थे दृढ़ाभक्तिर्नीचादिस्थेऽदृढ़ेति ॥ ३९...४३ ॥

सप्तमेश से द्वितीय में राहु हो तो उसके दाँत बड़े होते हैं, केतु हो तो स्तब्धवाक् यानी रुक कर बोलनेवाला हो, शनि हो तो कुरूप हो ॥ आत्मकारक के वर्णानुरूप वर्ण होता है। अमात्यकारक के अनुचर अर्थात् भ्रातृकारक से भी पूर्ववत् भक्ति का विचार करना ॥ ३९-४३ ॥

**स्वांशे केवलपापसम्बन्धे परजातः ॥४४॥ नात्र पापात् ॥ ४५ ॥ शनिराहुभ्यां प्रसिद्धिः ॥ ४६ ॥ गोपनमन्येभ्यः ॥४७॥ शुभवर्गेऽपवादमात्रम् ॥४८॥ द्विग्रहे कुलमुख्यः ॥ ४९ ॥**

## इति जैमिनिसूत्रे प्रथमाध्यायस्य चतुर्थः पादः ।

---

आत्मकारकांशे केवल पापसम्बन्धेपापग्रहसम्बन्ध्यंशे पाप-युक्ते पापदृष्टे तदा परजातः स्यात् अत्रात्मकारकस्य पापादिदं फलं न भवति। अर्थात् कारकातिरिक्तपापसम्बन्धादिदं फलं ज्ञेयम् शनिराहुभ्यां कारकांशे षड्वर्गादि रूपेण गताभ्यांप्रसिद्धिः परजातत्व प्रसिद्धिः स्यात् अन्येभ्यः पापेभ्यो गोपनं गुप्तरूपेणस्यात् कारकांशे शुभवर्गे पापदृग्योगे परजातत्वं न स्यात् किन्त्वपवाद-

मात्रमेव स्यात् आत्मकारकांशेग्रहद्वयेन युक्ते जातकः कुल-मुख्योभवतीति ॥ ४४-४८ ॥

आत्मकारकांश में केवल पापग्रह का सम्बन्ध हो तो पर-जात हो परन्तु यदि आत्मकारक ही पापी हो तो परजात न हो। कारक से शनि राहु का सम्बन्ध हो तो प्रसिद्ध हो जाय और अन्य ग्रहों के सम्बन्ध से गुप्त रह जाय। आत्मकारक शुभग्रह के राश्यादि में हो और पापग्रह की दृष्टि और योगादि सम्बन्ध हो तो परजातत्व का मिथ्या अपवाद हो। कारकांश में दो ग्रहों का योग हो तो वह कुल में प्रधान हो ॥ ४४-४९ ॥

इति सूत्रार्थ प्रकाशिकायां प्रथमे चतुर्थः पादः ।

समाप्तश्चप्रथमाध्यायः ।

# अथायुर्दायाध्यायो व्याख्यायते।

**आयुः पितृदिनेशाभ्याम् ॥ १ ॥**

पितृदिनेशाभ्यां लग्नेशाष्टमेशाभ्यामायुर्विचारः कार्यः। वक्ष्यमाणप्रकारेणेति शेषः ॥ १ ॥

( पितृ ) लग्नेश और ( दिनेश ) अष्टमेश से आयुष्य का विचार करना ॥ १ ॥

अथ दीर्घाद्यायुर्योगमाह।

**प्रथमयोरुत्तरयोर्वा दीर्घम् ॥ २ ॥ प्रथमद्वितीययोरन्त्ययोर्वा मध्यम् ॥ ३ ॥ मध्ययोराद्यन्तयोर्वा हीनम् ॥ ४ ॥ एवं मन्दचन्द्राभ्याम् ॥ ५ ॥ पितृकालतश्च ॥ ६ ॥**

प्रथमयोश्चरयोर्मध्ये स्थितयोर्लग्नेशाष्टमेशयोर्दीर्घम्, तथोत्तरयोः स्थिरद्विस्वभावयोर्मध्ये स्थितयोर्लग्नेशाष्टमेशयोर्दीर्घं स्यात्। अत्रैकस्मिन्नेव चरादौ द्वयोः स्थित्या एकस्यैव वा तदुभयस्वामित्वे न योगहानिरिति ॥ अथमध्यायुर्योगमाह।

प्रथमद्वितीययोश्चरस्थिरयोः स्थितयोस्तयोर्लग्नेशाष्टमेशयोर्मध्यम्। तथाऽन्त्ययोर्द्विस्वभावयोर्मध्ये स्थितयोर्मध्यम् मध्यायुः स्यादित्यर्थः ॥ अथाल्पायुर्योगमाह।

मध्ययोः स्थिरयोर्मध्ये स्थितयोस्तयोर्हीनम्, तथा आद्यन्तयोश्चरद्विस्वभावयोर्मध्ये स्थितयोस्तयोर्हीनं हीनायुः स्यात् ॥ एवमनयैव रीत्याऽर्थात् यथा लग्नेशाष्टमेशाभ्यामायुर्दायो विचारितस्तथैव मन्दचन्द्राभ्यां लग्नचन्द्राभ्यां वा शनिचन्द्राभ्यां

विचारः कार्यः । कुत्र मन्दशब्देन लग्नं कुत्र मन्दशब्देन शनिरित्यग्रे वक्ष्यति ॥ एवमेव पूर्वोक्तरीत्या पितृकालतो जन्मलग्नहोरालग्नवशादपि विचारः कार्यः ।

लग्नेश और अष्टमेश दोनों चरमें, वा एक स्थिर में और दूसरा द्विस्वभाव में हो तो दीर्घायु । दोनों द्विस्वभाव में वा एक चर में दूसरा स्थिर में हो तो मध्यायु, दोनों स्थिर में वा एक चर में तथा दूसरा द्विस्वभाव में हो तो हीनायु जानना, इसी प्रकार लग्न और चन्द्रमा से अथवा शनि चन्द्रमा से तथा लग्न और होरा लग्न से विचार करना। लग्न सप्त में चन्द्रमा हो तो लग्न चन्द्रमा से अन्यथा शनि चन्द्रमा से विचार करना ॥२–६॥

**संवादात् प्रामाण्यम् ॥ ७ ॥ विसंवादे पितृकालतः ॥ ८॥ पितृलाभगे चन्द्रे चन्द्रमन्दाभ्याम् ॥६॥**

अत्र त्रिविधेष्वायुर्दायेषु प्रकारत्रयेणैकाकारायुःप्रदत्वे निर्विवाद एव । तत्र भिन्नत्वे प्रकारद्वयेन यदायुरायाति तदेव ग्राह्यम् अथवा सर्वेषां योगस्त्रिभक्त इत्येव संवादो ग्राह्यः ॥ सर्वत्र विसंवादे निर्णयमाह । विसंवादे प्रकारत्रयेणापि भिन्नभिन्नरूपेणागते आयुर्दायखण्डे लग्नहोरालग्नाभ्यां यदागतं तदेव ग्राह्यम् ॥ एवं मन्दचन्द्राभ्यामिति सूत्रे कुत्र मन्दशब्देन शनेर्ग्रहणंकुत्र लग्नस्य ग्रहणमिति सन्देहं निराकुर्वन्नाह । पितृलाभगे लग्नसप्तमगे चन्द्रे तदा लग्न चन्द्राभ्यामन्यथाशनिचन्द्राभ्यामायुर्दायानयनंकार्यम् नीलकण्ठेन "सर्वत्रैव विसंवादे लग्नहोरालग्नाभ्यामायुः सत्वे एतत्सूत्रमपवादरूपं स्वीकृतं तथा सर्वदा मन्दशब्देन लग्नमेवादत्तं तच्च प्रमाणान्तराभावात् ग्रन्थान्तरेषु शनेरायुः प्रदत्वेन निश्चयात् उपेक्ष्यम् ॥ अत्र वृद्धवाक्यम् ।

"लग्नेशरन्ध्रपत्योश्च　लग्नेन्द्वोर्लग्नहोरयोः ।
सूत्राण्येवं प्रयुञ्जीयात् संवादादायुषां त्रये ॥
लग्नेन्द्वोरित्युपलक्षणं शनिचन्द्रयोरपि ग्रहणम् ।
चरे चरस्थिरद्वन्द्वाः स्थिरे द्वन्द्व चरस्थिराः ।
द्वन्द्वे　स्थिरोभयचरादीर्घमध्याल्पकायुषः ॥"

| दी | म | अ |
| --- | --- | --- |
| च<br>च | च<br>स्थि | च<br>द्वि |
| स्थि<br>द्वि | स्थि<br>च | स्थि<br>स्थि |
| द्वि<br>स्थि | द्वि<br>द्वि | द्वि<br>च |

अल्पायुरादिकं वृद्धैरुक्तम् ।

द्वात्रिंशात् पूर्वमल्पायुर्मध्यमायुस्ततो भवेत् ।
चतुःषष्ट्या पुरस्तात् तु ततो दीर्घमुदाहृतम् ॥
षट्त्रिंशात् पूर्वमल्पायुर्मध्यमायुस्ततोभवेत् ।
द्विसप्तत्यात्पुरस्तात् तु ततो दीर्घमुदाहृतम् ॥
चत्वारिंशत् पुरस्तात् तु हीनायुः परिकीर्त्तितम् ।
अशीत्यब्दात् पुरस्तात्तु मध्यायुः परिकीर्त्तितम् ॥
ततो दीर्घं भवत्येव विंशोत्तरशतात्मकम् ।
रसाङ्कै-९६ र्गजाभ्रेन्दुभिः १०८शून्यमासै-१२०
स्त्रिधा दीर्घमायुः कलौ संप्रदिष्टम् ।
चतुःषष्टि-६४ द्वाब्ध्य-७२शीति-८० प्रमाणै-
र्मतं मध्यमायुर्नृणां वत्सरैः स्यात् ॥

तथा द्वित्रि-३२षड्वह्नि-३६शून्याब्धि-४० वर्षै-
र्भवेदल्पमायुर्नराणां युगान्तेः ।
लग्नेशादष्टमेशाच्च योगैकः कथितो द्विज ।
होरालग्नाभ्यां द्वितीयं योगयोगं विचिन्तयेत् ॥
तृतीयं शनिचन्द्राभ्यां चिन्तनीयं सदा द्विज ।
लग्नेन्दुर्मदने वाऽपि चिन्तयेल्लग्नचन्द्रतः" ॥

अत्र द्वात्रिंशत् षट्त्रिंशच्चत्वारिंशदब्दमितखण्डेषु किं ग्राह्यम् अत्रोच्यते । योगत्रयेणापि दीर्घखण्डस्य प्राप्तौ चत्वारिंशदब्द-रूपं खण्डं ग्राह्यम् । योगद्वयेन दीर्घायुषि प्राप्ते षट्त्रिंशदब्दरूपं खण्डं ग्राह्यम् । योगैकेन द्वात्रिंशदब्दरूपं खण्डं ग्राह्यम् । अस्यैव विपरीतमल्पे । अर्थात् योगत्रयेष्वल्पायुर्योगे द्वात्रिंशत् । योगद्वयेन षट्त्रिंशत् । योगैकेन चत्वारिंशद्वर्षात्मकं खण्डं ग्राह्यम् । मध्यमायुषि लग्नेशाष्टमेशाभ्यामायुरानयने चत्वारिंशत् । लग्नचन्द्राभ्यां वा शनिचन्द्राभ्यां षट्त्रिंशत् । लग्नहोरालग्नाभ्यां द्वात्रिंशदब्दरूपं खण्डं प्रकल्प्यानुपातेनायुर्दायानयनं कार्यम् । तत्रानुपातो यथा । यदि त्रिंशदंशैर्द्वात्रिंशदब्दरूपं षट्त्रिंशदब्द-रूपं चत्वारिंशदब्दरूपं वा खण्डं तर्हि लग्नेशादेर्वर्त्तमानराशेर्भु-क्तभागैः किमिति रीत्या फलमानीय लब्धं प्राप्तखण्डे शोध्यम् । यदवशिष्टं तदल्पायुः सम्बन्धि चेत् तदा तदेव स्पष्टायुः । मध्यायुषः सम्बन्धि चेत् तदा प्राप्तखण्डानुसारेण द्वात्रिंशत्-षट्त्रिंशच्चत्वारिंशन्मध्ये वा योजनीयम् । यदि दीर्घायुषः सम्बन्धि तदा चतुःषष्टिद्विसप्तत्यशीतिमध्ये वा योजनीयम् । एवं पृथक् लग्नेशादिकानां फलमानीय तद्योगं कृत्वा योगकारक संख्यया विभज्य स्पष्टायुर्मानं विज्ञेयम् । इति प्रस्तारसूत्रागता-युर्विवेकः । एवमेवानुपातविधिर्वृद्धेनाप्यभिहितः ।

"पूर्णमादौ हानिरन्तेऽनुपातो मध्यतो भवेत् ॥
राशिद्वयस्य योगार्धं वर्षाणां स्पष्टमुच्यते ॥"

अस्यार्थः । आदौ राश्यादौ स्थिते ग्रहे तत्खण्डस्य पूर्णत्वम् । अन्ते राश्यन्ते हानिस्तत्खण्डस्य नाशः मध्येत्वनु पातः एवमनयारीत्या योगकारकयोः पृथक पृथक् स्पष्टतां विधाय तयो राश्योर्वर्षाणां योगार्धं स्पष्टमुच्यत इति ॥ ९ ॥

इस प्रकार आयुर्दाय विचार करने के बाद संवाद से अर्थात् मतैक्य से प्रमाण जानना, यानी इनमें तीनों रीति से वा दो प्रकारों से जो आयुर्दाय आवै वही मानना । तीनों से भिन्न भिन्न प्रकार का हो तो लग्न होरा लग्न से जो आवे वही आयुर्दायठीकमानना "पितृलाभगे"—इससूत्रका अर्थ पहले लिखा जा चुका है । अल्पायु ३२, ३६, ४०, तक, मध्यायु, ६४, ७२, ८० तक एवं दीर्घायु ९६, १०८, १२०, तक होता है, इसमें खण्ड मान ३२, ३६, या, ४० है । यदि तीनों प्रकार से दीर्घायु हो तो १२० दो प्रकार से १०८ एक प्रकार से हो तो ९६ जानना इसी प्रकार तोनों प्रकार से आल्पायु हो तो ३२ दो प्रकार से ३६ एक प्रकार से हो तो ४० वर्ष जानना । मध्यायु में लग्नेश अष्टमेश से ४० लग्न चन्द्रमा से ३६, लग्न होरा लग्न से ३२ वर्ष के खण्ड को लेकर आयुष्य बनाना, आयुर्दाय के स्पष्ट करने की रीति यह है कि प्रथम ग्रहस्पष्ट तथा लग्न स्पष्ट कर लेना पहले के सूत्रों से यह निश्चय हो गया कि योग कर्त्ता कितने हैं प्रत्येक योगों में दो दो वस्तु से आयु का विचार है । यदि एक ही रीति से आयु का निश्चय होगा तो दो योग कर्त्ता होंगे वहाँ दोनों के अंशादि योग में दो का भाग देना । दो योगों से आयुर्दाय का निश्चय हो तो चार योग कर्त्ता होंगे वहाँ चारों के अंशादि योग में चार का भाग देना । जहाँ तीनों योगों

से आयु निकले वहाँ छ योग कर्त्ता होंगे तो छहों के अंशादि के योग में छः का भाग देना इसके बाद इन लब्ध अंशादि को योग प्राप्त ३२, ३६ या ४० से गुणा कर ३० का भाग देकर वर्षादि लाना—यदि अल्पायु होगा तो उसे प्राप्त खण्ड में घटा देना तो वही आयुर्दाय होगा, मध्यायु हो तो मध्यायु के खण्ड में घटाने से और दीर्घायु हो तो उसको दीर्घायु के मान में घटाने से स्पष्ट आयु का मान इन सूत्रों के अनुसार हो जायगा। परन्तु मध्यमायु हो तो अलग अलग लाकर ही योग कर योग संख्या से भाग देने से ठीक आता है ॥७-९॥

**शनौ योगहेतौ कक्षाह्रासः ॥ १० ॥ विपरीत-मित्यन्ये ॥ ११ ॥ न स्वर्क्षतुङ्गे सौरे ॥ १२ ॥ केवलपापदृग्योगिनि च ॥ १३ ॥**

यद्यत्र शनिर्योगकर्त्ता चेत् तदा कक्षाह्रासः स्यात्। अत्र श्रीमता नीलकण्ठेनैवं प्रदर्शितम्, "दीर्घं चेन्मध्यं मध्यं चेदल्प-मल्पं चेन्न किञ्चित्" इति। मतान्तरमाह—अन्ये आचार्या एवं प्रोचुः शनिर्योगकर्त्ता चेत् तदा विपरीतं कक्षाह्रासोनस्यादिति अथ स्वमतमाह सूत्राभ्याम्—स्वर्क्षतुङ्गे सौरे कक्षाह्रासो न स्यात्। अर्थान्नीचराशौ शत्रुराशौ वा स्थिते शनौ कक्षाह्रासो नान्यत्र। अत्रापि विशेषमाह—केवलपापदृग्योगिनि च शनौ नीचादि-राशौस्थितेऽपि न कक्षाह्रास इत्यर्थः ॥ १२—१३ ॥

इसमें विशेष यह है कि यदि शनियोगकर्ता हो तो कक्षा ह्रास होता है किसी के मतसे कक्षाह्रास नहीं होता परन्तु जैमिनि का मत यह है कि शनि अपने राशि में वा उच्च राशि में हो तो कक्षाह्रास नहीं होता अन्यथा होता है और शनि केवल पाप ग्रहों ही से युक्त दृष्ट हो तौ भी कक्षाह्रास नहीं होता,॥१०-१२॥

अथ कक्षावृद्धि योगं दर्शयति।

**पितृलाभगे गुरौ केवलशुभदृग्योगिनि च कक्षावृद्धिः॥ १४॥**

गुरौ पितृलाभगे लग्नसप्तमगे सति कक्षावृद्धिर्भवति तथा केवलशुभदृग्योगिनि च गुरौ कक्षावृद्धिर्भवति। अत्रापि न स्वर्क्षतुङ्गगे सौरे इति सूत्रपर्यालोचनया स्वर्क्षतुङ्गगे एव योगकारिणी गुरौ कक्षावृद्धिर्नान्यत्रेति फलितार्थो निस्सरति। वृद्धिप्रकारस्तु स्वाम्यादिभिरेवं प्रदर्शितः। अनायुषोऽल्पायुरल्पायुषो मध्यमायुर्मध्यमायुषो दीर्घायुर्दीर्घायुषः पूर्णायुरिति। परमत्र ग्रन्थे अनायुषपूर्णायुषयोगयोर्कथनाभावात् इति कथनं न समीचीनम्। तत्र किं ग्राह्यमित्युच्यते—तत्र कक्षा त्रिविधा द्वात्रिंशदब्दरूपा प्रथमा। षट्त्रिंशदब्दरूपा द्वितीया। चत्वारिंशदब्दरूपा तृतीया। तत्र शनौ योगकर्त्तरि तृतीयायाः कक्षायाःप्राप्तौ द्वितीया ग्राह्या। द्वितीयाःप्राप्तौ प्रथमा ग्राह्या। प्रथमायाः प्राप्तौ तत्पूर्वखण्डस्याभावाच्चरदशायां शनिस्थितराशेर्या दशा तदर्धं हीनं कार्यम्। तत्रापि राश्यदिराश्यन्तवशादनुपातागतमेव फलं ज्ञेयम्। एवमेव कक्षावृद्धावपि। प्रथमकक्षा प्रातौ द्वितीयकक्षायाः ग्रहणम्। द्वितीयायाः प्राप्तौ तृतीयकक्षायाः ग्रहणम् तृतीयायाः प्राप्तौ तत्परखण्डाभावात् तत्खण्डे गुरुर्यस्मिन् राशौ स्थितस्तद्राशेर्या चरदशा तदर्धं योजनीयम्। अत्राप्यनुपातः पूर्ववत्। एवं प्रथमखण्ड प्रमाणम्।

अत्र विशेषस्तु वृद्धैरुक्तः।

"एकोष्टमेशः स्वोच्चस्थः पर्यायार्धं प्रयच्छति।
नीचस्थो नाशयेत् पर्यायार्धमायुषि निश्चिते॥

नीचरन्ध्रेशसंयुक्ताः पर्यायार्धं पृथक् पृथक् ।
ग्रहा विनाशयन्त्येवं निर्णीते परमायुषि ॥
उच्चरंध्रेशसंयुक्तग्रहैः प्रत्येकमुन्नयेत् ।
एकैकमर्धपर्यायं परमायुषि निश्चिते" ॥१४॥

प्रथम सूत्र के अनुसार यदि वृहस्पति योग कर्त्ता हो और लग्न वा सप्तम में हो या कहीं हो केवल शुभ ग्रहों ही से युक्त दृष्ट हो तो कक्षावृद्धि होती है। कक्षा ह्रास वा वृद्धि का क्रम नीलकण्ठ ने यह लिखा है कि परमायु का दीर्घायु, दीर्घायु का मध्यायु, मध्यायु का अल्पायु और अल्पायु का कुछ नहीं—इसको कक्षा ह्रास कहते हैं। अनायु का अल्पायु, अल्पायु का मध्यायु, मध्यायु का दीर्घायु और दीर्घायु का परमायु होता है इसको कक्षा वृद्धि कहते हैं। परन्तु इस ग्रन्थ से अनायु और परायु का ज्ञान नहीं होता, इससे यह कल्पना ठीक नहीं है कक्षा शब्द से एकादश अंक निकलता है इससे किसी का मत है कि एकादश वर्ष का ह्रास वा वृद्धि करना, कक्षा ग्रहों के मार्ग को कहते हैं उसमें वारह राशि होती हैं इससे किसी का मत है कि वारह वर्ष का ह्रास वा वृद्धि करना परन्तु वास्तव प्रकार यह है कि इस ग्रन्थ में तीन कक्षा हैं ३२, ३६ और ४० की है यदि ३२ की प्राप्ति पूर्व नियमानुसार हो तो ३६ ग्रहण करना, ३६ की प्राप्ति हो तो ४० ग्रहण करना, ४० की प्राप्ति हो तो वृहस्पति जिस राशि में हो उसकी चरदशा का आधा चालीस में जोड़ कर उतना अल्पायु, उसका द्विगुणित मध्यायु और त्रिगुणित दीर्घायु का मान मानकर स्पष्ट आयु वनाना। इसी प्रकार कक्षा ह्रास में ४० की जगह छत्तीस, छत्तीस की जगह वत्तीस और ३२ में कक्षा ह्रास पाने पर जिसमें शनि पड़ा हो उस राशि के

चरदशा के आधे को ३२ में घटा कर उसको अल्पायु मानकर पूर्ववत् अनुपात से आयु का मान स्पष्ट निकालना ॥१४॥

अथायुः प्रमाणसिद्धं मारक योगमाह।

**मलिने द्वारबाह्ये नवांशे निधनं द्वारद्वारेशयो-श्चमालिन्ये ॥१५॥**

द्वारबाह्ये मलिने नवांशे तद्द्वारराशेर्नवांशदशायां निधन भवति। तथा द्वारद्वारेशयोश्चापि मालिन्ये तद्द्वारदशायां निध-नं भवति। मालिन्यं पापयोगपापदृष्ट्यादिकम्। दशाश्रितराशे द्वारसंज्ञा। दशारम्भराशेर्यावत्संख्यो द्वारराशिस्तस्मात् ताव-त्संख्यो राशिः बाह्यराशिरित्युच्यते। नवांशदशा तु विषमे तदादिर्नवांशा इत्यादिना वक्ष्यति ॥ १५ ॥

जिस राशि की दशा वर्तमान हो उस राशि को द्वार कहते हैं। प्रथम दशाप्रद राशि से द्वार राशि जितनी दूर हो, द्वार से भी उतनी ही संख्या गिनने से जो राशि हो उसको बाह्य कहते हैं। द्वार बाह्य राशि नवांश दशा के हिसाब से जो हो वे पाप-युक्त पापदृष्टि इत्यादि वक्ष्यमाण रीति से मलिन हो वा द्वार-द्वारेश मलिन हो तो उस द्वार राशि की दशा में निधन यानें मरण कहना नवांश दशा आगे बनेगी ॥ १५ ॥

अत्रापवादमाह—

**शुभदृग्योगान्न ॥ १६ ॥**

द्वारबाह्ययोरुपरि वा द्वारद्वारेशयोरुपरिशुभदृग्योगा तद्द्वारराशिदशायां न निधनं स्यात् ॥ १६ ॥

शुभग्रहोंके दृष्टियोग से मरण उस दशामें नहीं होता ॥१६

अत्र विशेषमाह।

**रोगेशे तुङ्गे नवांशवृद्धिः ॥ १७ ॥**

रोगेशे जन्मलग्नादष्टमेशे तुङ्गे स्वोच्चगे सति पूर्वनिश्चित राशि-नवांशदशायां निधनं न स्यात्। किन्तु नवांशवृद्धिरर्थान्नवाब्दवृद्धिर्भवतीत्यर्थः। अर्थात् तदग्रिमराशिदशायां निधनं स्यात् ॥१७॥

अष्टमेश अपने उच्चमें हो तो प्रथम प्रकार से आये आयुर्दाय में नव वर्ष बढ़ा देना चाहिये ॥ १७ ॥

## तत्रापि पदेशदशान्ते पदनवांशदशायां पितृदिनेशत्रिकोणे वा ॥ १८ ॥

मालिन्यविशिष्टमारकराशिदशायां वा तदग्रिमराशिदशायां वा निधनं कदा स्यादित्याशङ्कायामाह। तत्रापि मालिन्ययुक्तराशिदशायां तदग्रिमराशिदशायां वा पदस्य लग्नपदस्य यः स्वामी तदाश्रयीभूतराशिदशान्ते वा पदराशिनवांशदशायामथवा लग्नाष्टमेशात् त्रिकोणराशिदशायां निधनं स्यात्। अत्रत्यनवांश शब्दस्तु अन्तर्दशाया अपि वाचकः। अथवा वृद्धिपक्षेऽपि पदेशदशान्ते पदनवांशदशायां पितृदिनेशत्रिकोणराशिदशायां वाऽन्तर्दशायां निधनं स्यादित्यर्थः ॥ १८ ॥

पूर्व रीति से कथित राशि दशामें भी पदेश ग्रह जिस राशि में हो उसकी दशा में, वा पद राशि की दशा में वा अष्टमेश के त्रिकोण राशि की दशा में अथवा इन्हीं राशियों की अन्तर्दशामें मरण कहना ॥ १८ ॥

अथ प्रकारान्तरेण दीर्घादियोगमाह।

## पितृलाभरोगेशप्राणिनि कण्टकादिस्थे स्वतश्चैवं त्रिधा ॥ १९ ॥

लग्नात् सप्तमाच्च यावष्टमेशौ तयोर्यो वली तस्मिन् केन्द्रादिस्थे केन्द्रपणफरापोक्लिमस्थे त्रिधायोगो भवति केन्द्रे दीर्घम् पणफरे मध्यम्। आपोक्लिमेऽल्पम्। एवमेवात्मकारकाच्चापि

योगत्रयं वेदितव्यम्। अर्थादात्मकारकात् तत्सप्तमाच्च यावष्टमेशौ तयोर्मध्ये यो वली स च यदि कारकात् केन्द्रादिगतस्तदा त्रिधा योगो भवति। केन्द्रे दीर्घम्। पणफरे मध्यम्। आपोक्लिमेऽल्पम्। अत्र पितृलाभरोगेश इत्युक्त्या लग्ने विषमे क्रमात् समे व्युत्क्रमादष्टमेशो ग्राह्य इति सूचितं भवति॥ १९॥

लग्न और सप्तम के अष्टमेशों में जो वलवान् वह लग्न से केन्द्रादि में हो तो दीर्घ, मध्य, और अल्पायु होता है इसी प्रकार आत्मकारक तथा उसके सप्तम के अष्टमेशों में जो वलवान् वह कारक के केन्द्रादि में हो तो दीर्घ मध्य और अल्प आयु का प्रमाण होता है। यहाँ लग्न का अष्टमेश और सप्तम का अष्टमेश कहने का तात्पर्य यह है कि लग्न विषम हो तो क्रम से और सम हो तो उत्क्रम से अष्टमेश की गणना करनी एवं केन्द्र पणफर तथा आपोक्लिम भी इसी प्रकार जानना॥ १९॥

अत्रापवादमाह।

## योगात् समे स्वस्मिन् विपरीतम्॥ २०॥

## राशितः प्राणः॥ २१॥

योगाज्जन्मलग्नसप्तमात् समे नवमे स्वस्मिन्नात्मकारके विपरीतं दीर्घंचेदल्पं मध्यं चेन्मध्यं हीनं चेद्दीर्घमित्यर्थः। अर्थात् केन्द्रे हीनम्। पणफरे मध्यम्। आपोक्लिमेदीर्घमिति। अत्रापि लग्ने विषमे क्रमतः सम उत्क्रमतो नवमं ग्राह्यम्॥ २०॥

अस्मिन् प्रकरणे राशि वलतो वलं ग्राह्यम्। कारकयोगः प्रथमो भानामित्यादिकं वक्ष्यमाणम्। "अग्रहात् सग्रहो ज्यायान्"—इत्यादिकं च। अत्रांशाधिक्यवलं न ग्राह्यम्॥२१॥

लग्न विषम हो तो तृतीय में और सम हो तो एकादश में यदि कारक हो तो कारक वश आयुर्दाय आनयन में वलवान अष्ट

मेश कारक के केन्द्र में हो तो अल्पायु। पणफर में हो तो मध्यायु और आपोक्लिम में हो तो दीर्घायु जानना और राशि बल के सदृश वक्ष्यमाण रीति से ग्रहों का भी बल देखना ॥ २०—२१ ॥

अत्र विशेषमाह।

**रोगेशयोः स्वतः ऐक्ये योगे वा मध्यम् ॥ २२ ॥**

रोगेशयोर्लग्नकारकयोर्बलवदष्टमेशयोः स्वतः कारकेण सह ऐक्ये योगे वा सति मध्यायुरर्थात् पितृलाभेत्यादिना सिद्धं दीर्घायुश्चेत् तदापि मध्यायुः हीनायुश्चेत् तदापि मध्यायुर्मध्यायुश्चेत तदा तु निर्विवादएव। अत्रात्मकारकाष्टमेशेनात्मारकस्यैक्ये योगे वा दीर्घस्यैव मध्यमत्वम्। लग्नाष्टमेशेन कारकैक्ये योगे वा हीनस्यापि मध्यत्वं वेदितव्यम्। यत् तु सुबोधिनीकारेण "जातकशास्त्रान्तरे लग्नस्य अस्मिन् ग्रन्थे कारकस्य प्राधान्यादष्टमेशयोगेनायुषो ह्रास एवेति विभावनीयम्"-इत्युक्तं तदसङ्गतम्। अष्टमेशयोगेनापि रोगेशे तुंगे नवांशवृद्धिः। तथा—

"एकोऽष्टमेशः स्वोच्चस्थः पर्यायार्धं प्रयच्छति"।

इत्यादावायुषो वृद्धिसद्भावात् ॥ २२ ॥

लग्न और कारक के बलवान् अष्टमेश कारक के साथ हों वा कारक ही हो जावे तो अल्पायु वा दीर्घायु कुछ भी हो मध्यायु ही मुख्य जानना ॥ २२ ॥

अथात्र दीर्घादियोगेषु कक्षाह्रासयोगमाह।

**पितृलाभयोः पापमध्यत्वे कोणे पापयोगे वा कक्षाह्रासः ॥२३॥**

पितृलाभयोर्लग्नसप्तमयोः पापमध्यत्वे प्राप्ते वा कोणे नवपञ्चमयोः पापयोगे सति काक्षाह्रासो भवति। तत्र यदि लग्नाष्टमे-

शवशादायुर्दायानयनं तत्र लग्नस्य पापमध्यत्वम्। लग्नात् त्रिकोणे पापयोगश्चान्वेष्यः। यत्र सप्तमाष्टमेशवशाद्योगप्राप्तिस्तत्र सप्तमस्य पाप मध्यत्वं। सप्तमात् त्रिकोणे पापयोगो विचार्यः। एवमेव कारकादपि योगविभागो वेदितव्यः ॥२३॥

लग्न या सप्तम पापग्रह के मध्य में हो लग्न सप्तम के त्रिकोण में पाप योग हो तो इस प्रकरण के आयुर्दाय में कक्षाह्रास जानना ॥ २३ ॥

## स्वस्मिन्नप्येवम् ॥ २४ ॥

स्वस्मिन् कारकेऽप्येवमेव भवति। कारकराशेस्तत्सप्तमराशेश्च पापमध्यत्वे प्रथमो योगः। तयोस्त्रिकोणे पापे सति द्वितीयो योग इति ॥ २४ ॥

आत्मकारककृत आयुर्दाय में भी पूर्वसूत्रानुसार कक्षाह्रास होता है ॥ २४ ॥

अथान्ययोगं दर्शयन्ति।

## तस्मिन् पापे नीचेऽतुङ्गेऽशुभसंयुक्ते च ॥२५॥

तस्मिन्नात्मकारके पापे नीचराशौ स्थिते कक्षाह्रासः। अतुङ्गेऽनुच्चराशौ नीचोच्चवर्जिते राशौ स्थिते पापयुक्ते च कक्षाह्रासो भवतीति ॥ २५ ॥

कारक पाप ग्रह हो और नीच में हो (१) वा उच्च नीच से अतिरिक्त स्थान में हो पापयुक्त हो (२) तो कक्षा ह्रास होता है।

सर्वत्रापवादमाह।

## अन्यदन्यथा ॥ २६ ॥

लग्नसप्तमयोः कारकसप्तमयोर्वा शुभमध्यत्वे वा तेषां त्रिकोणे शुभयोगे कक्षावृद्धिर्भवति। अत्र कक्षावृद्धिशब्देनैकराशिवृद्धिरेव ग्राह्या ॥ २६ ॥

इससे उलटा हो तो कक्षावृद्धि होती है ।

गुरौ च ॥ २७ ॥

गुरावपि कक्षाह्रासवृद्धि योगं दर्शयति । गुरोः पापमध्यत्वे वा गुरोस्त्रिकोणे पापयोगे सति कक्षाह्रासः । गुरोः शुभमध्यत्वे तथा तस्मात् त्रिकोणे शुभसंयोगे कक्षावृद्धिः । तथा गुरौ नीचे पापसंयुक्ते च कक्षाह्रास इत्यर्थः ॥ २७ ॥

बृहस्पति से भी इसी प्रकार कक्षाह्रास वृद्धि होती है ।

अथात्र विशेष माह ।

पूर्णेन्दुशुक्रयोरेकराशिवृद्धिः ॥ २८ ॥

शनौ विपरीतम् ॥ २९ ॥

शुभ ग्रहेण मध्यत्वे प्राप्ते पूर्णेन्दुशुक्रयोर्योगे न कक्षावृद्धिः किन्त्वेकराशिवृद्धिरेव ॥ तथा पाप सम्बन्धेन कक्षाह्रासयोगे प्रसक्ते उक्तस्थाने शनौ सति न कक्षाह्रासः । किन्त्वेकराशिह्रास एव । पूर्वसूत्रे चन्द्रशुक्रयोः प्राधान्याद्शुभग्रहान्तरेष्वपि योगकारकेषु कक्षावृद्धिस्थाने एकराशिवृद्धिरेव इत्याशयेनैव सुबोधिन्यामपि श्रीमता नीलकण्ठेनोक्तम् "अत्र चन्द्रशुक्रशनीनां प्रामाण्येन योगकर्त्तृत्वेन ग्राहान्तरेषु योगकारकेष्वपि एकराशे-र्वृद्धिर्ह्रासो वा स्यान्नतु कक्षाया इत्यर्थ" इति ।

अथ प्रकारान्तरेणायुर्दायनिश्चयमाहुर्वृद्धाः ।

"धर्मेमोक्षे चिरायुष्यं धर्मे कामे च मध्यमम् ।
धर्मे धने च स्वल्पायुर्धने धर्मे गतायुषः ॥"

अस्यार्थः । "आयुः पितृदिनेशाभ्याम्"—इत्यत्र लग्नेशाष्ट-मेशौ यदि एकादशपञ्चमयोश्चेत् तदा दीर्घायुः । एकादशतृतीय-योश्चेत् तदा मध्यायुः । एकादशद्वितीययोरेकादशनवमयोर्वा चेदल्पायुः । द्वावपि एकादशे भवतस्तदा गतायुरित्यर्थः ।

अन्यच्च।

"लग्नलग्नेशतद्राशिनाथभानां त्रिकोणके।
अल्पमध्यचिरायुष्यं रूपवर्षप्रमाणतः॥"

अस्यार्थः। योऽयमष्टमेशादिरिह सूत्रेषु निर्णयकारकः समाश्रितः सचेल्लग्नत्रिकोणे तर्हि हीनायुष्यं लग्नेशत्रिकोणे चेन्मध्यायुष्यं लग्नेशाश्रितराशिनाथत्रिकोणे चेद्दीर्घायुष्यमिति विभागः। तत्रापि यथोपदिष्टं क्रमव्युत्क्रमं ज्ञेयम्। रूपवर्षप्रमाणत रूपवर्षन्तु द्वादश वर्षमितम् तत्प्रमाणतः अर्थात् लग्ने द्वादश वर्षाणि पञ्चमे चतुर्विंशतिः नवमे षट्त्रिंशत् लग्नेश राशौ अष्टचत्वारिंशत् ४८ तत्पञ्चमे षष्टिः ६० तन्नवमे द्विसप्ततिः ७२ लग्नेशाश्रितराशिनाथ गृहे चतुरशीतिः ८४ तत्पञ्चमे षण्णवती ९६ तन्नवमे अष्टाधिकशतं १०८ परं विंशत्यधिकशतसमे परमायुर्माने लग्ने त्रयोदश वर्षाणि चत्वारो मासाः। पञ्चमे चेत् तदा षड्विंशतिर्वर्षाण्यष्टौ मासाः नवमे चेत् तदा चत्वारिंशद्वर्षाणि। लग्नेशाश्रितराशौ चेत् त्रिपञ्चाशद्वर्षाणि चत्वारो मासाः लग्नेशात् पञ्चमे षट्षष्टिर्वर्षाणि अष्टौ मासाः लग्नेशान्नवमे चेत् तदाऽशीतिर्वर्षाणि। लग्नेशाश्रितराशिनाथस्थाने त्रिनवतिर्वर्षाणि चत्वारो मासाः। तत्पञ्चमे षडुत्तरशतवर्षाण्यष्टौ मासाः तन्नवमे पूर्णायुरिति। एवमेव षण्णवति मितेपरमायुष्यनुपात वशाद्वर्षाणिज्ञेयानि !

अन्यच्च विशेषो वृद्धैरुक्तः।

"तुलामेषविलग्ने तु प्रायः शुक्रो भवेद्बली।
रविः कुजः शनी राहुर्मरणे बलिनः क्रमात्॥
विरोधे दुर्बलं हित्वा ग्राहयेद्सद्बलं सुधीः।
केतुश्च शनिवज्ज्ञेयो नाथैरेभिश्च निर्दिशेत्॥

शनिना राहुणा वाऽपि युक्ते सौम्यैरवीक्षिते ।
पर्यायमेकं तन्मध्ये चैकराशौ मृतिं वदेत् ॥
तयोस्तु शुभयोगे तु तद्राशौ मृतिमादिशेत् ।
भोगराशौदुर्वले वा प्रवले वा ग्रहे स्थिते ॥
तथाऽपि निर्दिशेत् काले मरणं नात्र संशयः ।
केतौ श्रीमद्दशानाथे नाथे वा शुभवीक्षिते ॥
केतोर्दशान्ते मृत्युः स्यात् शुभदृष्टे न किश्चन"–इति॥२९॥

पूर्ण चन्द्रमा और शुक्र के सम्बन्ध से अर्थात् शुभमात्र के योग से जो कक्षा वृद्धि कही गई है इस प्रकरण में नव वरस की वृद्धि होती है और शनि से अर्थात् पाप ग्रहों के योग से कक्षाह्रास में नव वर्ष का ह्रास होता है ॥ २८ ॥ २९ ॥

## स्थिरदशायां यथाखण्डं निधनम् ॥३०॥

## तत्रर्त्तविशेषः ॥३१॥

स्थिरदशायां "शशिनन्दपावकाः"–इत्यादिना वक्ष्यमाणायां यथाखण्डं खण्डमनतिक्रम्य इति यथाखण्डं निधनं स्यात् अर्थात् पूर्णायुषस्त्रिविभागमल्प मध्यदीर्घरूपं कार्यम् । हीनायुश्चेत् प्रथमखण्डे मध्यायुश्चेद्द्वितीयखण्डे पूर्णायुश्चेत् तृतीय खण्डे निधनं स्यात् प्रथमदशा प्रदराशेश्चतुर्थान्तं प्रथमखण्डम् । पञ्चमादष्टमान्तं द्वितीयखंडम् । नवमाद्द्वादशान्तं तृतीयखंडमिति । तत्र यथाखण्डेऽपि कदा निधनं स्यादित्याशङ्क्याह राशिविशेषो वक्ष्यमाणरूपः स्यात् ॥ अथ राशिविशेषलक्षणं दर्शयति ।

## पापमध्ये पापकोणे रिपुरोगयोः पापे वा ॥३२॥

पापमध्ये यो राशिस्तद्राशिदशायाम् । पापकोणे यो राशिस्तस्य दशायाम् । अथवा यस्माद्राशे रिपुरोगयोर्द्वादशाष्टमयोः पापे पापग्रहे तद्राशिदशायां वा निधनं भवति । तदुक्तं वृद्धैः ।

"शुभमध्ये मृतिर्नैव पापमध्ये मृतिर्भवेत्"-इति ॥३०-३२॥

स्थिर दशा ब्रह्म ग्रहादि बारहो राशि की बनती है अल्पायु हो तो उसमें प्रथम चार राशि की दशामें मध्यायु हो तो द्वितीय चार राशि की दशा में दीर्घायु हो तो तृतीय चार राशि की दशा में मृत्यु होती है। इसमें जो राशि पाप मध्यम गत हो जिसके त्रिकोण में पाप ग्रह हों अथवा जिससे द्वादश अष्टम में पाप ग्रह हों उस राशि की दशा में मृत्यु होती है ॥३०-३२॥

पुनरपि राशिविशेषमाह।

## तदीशयोः केवलक्षीणेन्दुशुक्रदृष्टौ वा ॥३३॥

तदीशयोर्मलिने द्वारबाह्येनवांशे निधनमित्युक्तत्वाद्द्वार बाह्येशयोर्ग्रहान्तरदृष्टिरहितयोः केवलक्षीणेन्दुशुक्रदृष्टयोः सतो स्तद्द्वारराशिदशायां निधनं स्यात्। अथवा तदशीयोर्द्वादशा ष्टमेशयोः पूर्वलक्षणाक्रान्तयोः सतोर्द्वादशाष्टमराशिदशायां निधनं भवतीत्यर्थः ॥ ३३ ॥

अथवा स्थिरदशावश जो द्वारवाह्य राशि हों उनके स्वामी केवल क्षीण चन्द्र तथा शुक्र से देखे जायँ तो उस दशा में मृत्यु होती है ॥ ३३ ॥

## तत्राप्याद्यक्षारिनाथदृश्यनवभागाद्वा ॥३४॥

तत्राप्यर्थान्मारकलक्षणाक्रान्तराशेर्बहुवर्षव्यापिन्यां दशाया मपि प्रथमदशाप्रदराशेर्योऽष्टमेशस्तद्दृश्यराशिनवभागान्मरण- मष्टमेशेन दृष्टो यो राशिस्तदन्तर्दशायामित्यर्थः। अथवा जन्म लग्नादष्टमषष्ठाधीशाभ्यां दृष्टो यो राशिस्तदन्तर्दशायां तन्नवांश- दशायां वा निधनं स्यात्।

उसमें भी दशाश्रितराशि के जो अष्टमेश वह जिन राशियों को देखता हो उनकी दशा वा अन्तर्दशा में मृत्यु जानना ॥३४॥

अथ निधनाश्रयीभूतराशिलक्षणं प्राकान्तरेण दर्शयितुं रुद्र ग्रह माह ।

**पितृलाभभावेशप्राणी रुद्रः ॥३५॥ अप्राण्यपिपाप दृष्टः ॥३६॥ प्राणिनि शुभदृष्टे रुद्रशूलान्तमायुः॥३७॥**

लग्नसप्तमयोः पूर्णप्रवृत्तक्रमोत्क्रमगणनया यावष्टमेशौ तयो र्मध्ये यो बली स रुद्रसंज्ञको ग्रहः ॥ लग्नसप्तमयोः पूर्वरीत्या यावष्टमेशौ तत्र यो निर्बलः स पापदृष्टश्चेत् तदा सोऽपि रुद्रः स्यात् ॥ अथास्य प्राणीरुद्रस्य प्रयोजनमाह । प्राणिनि वलिनि रुद्रग्रहे शुभदृष्टे सति रुद्रशूलान्तमल्पमध्य दीर्घायुर्भेदेन प्रथम शूलान्तं द्वितीयशूलान्तं तृतीयशूलान्तं चायुः समाप्तिर्भवति, लग्नात् पञ्चमपर्यन्तं प्रथमशूलम् । पञ्चमान्नवमपर्यन्तद्वितीयं शूलम् । नवमाल्लग्नपर्यन्तं तृतीयशूलमित्यर्थः ॥ ३५-३७ ॥

लग्नसप्तम से जो अष्टमेश उनमें वलवान को रुद्रग्रह कहते हैं-जो दुर्वल है वह भी पापदृष्ट हो तो रुद्र होता है वलवान रुद्र शुभदृष्ट हो तो उसके त्रिकोण राशिकी दशा में आयु की समाप्ति जानना ॥ ३५-३७ ॥

**तत्रापि शुभयोगे ॥३८॥**

तत्रापि अप्राणिनि रुद्रेऽपि शुभयोगे सति अप्राणिरुद्रशूल दशान्तं मरणं भवतीत्यर्थः । तत्रापि प्राणिरुद्रेऽपि-पदं निश्चया त्मकम् । "शुभयोगे सति निश्चयेन रुद्रशूलान्तमायुर्भवति इति काशिकाकारेणोक्तम् । अयमेवार्थः समीचीन इति प्रति भाति । यतः पूर्वं शुभदृष्ट्या एव योगसिद्धिस्तेनैव शुभयोगेन तस्य निश्चयत्वं प्रतिपद्यते ॥३८॥

वलवान् वा दुर्वल कोई भी रुद्र शुभ संयुक्त हो तो उसके

त्रिकोणराशि पर्यन्त आयु जानना इधर त्रिकोण कर के लग्न पञ्चम और नवम तीनों स्थानों का ग्रहण होता है ॥३८॥

व्यर्कपापयोगेन ॥३९॥

रविरहितपापयोगे सति नेदं फलं भवति। अर्थाद्रवियोगेन नास्य फलस्य भङ्ग इत्यर्थः। अत्र प्रकरणे रविः शुभग्रह एव न पापग्रह इति ॥ ३९ ॥

रवि रहित पापयोग से मृत्यु नहीं होती—इस प्रकरण में रवि शुभग्रह है ॥३८॥

अथ रुद्रद्वयस्य फलविशेषं दर्शयति।

मन्दारेन्दुदृष्टे शुभयोगाभावे पापयोगेऽपि वा शुभदृष्टौ वा परतः ॥४०॥

मन्दारेन्दुदृष्टे शनिभौमचन्द्रैः दृष्टे रुद्रद्वये शुभयोगाभावे एको योगः। मन्दारेन्दुदृष्टे रुद्रद्वये पापयोगे द्वितीयः। मन्दारेन्दु दृष्टे रुद्रद्वये शुभदृष्टौ वा सत्यां परतो रुद्रशूलात् परत आयुः समाप्तिर्भवतीति। अत्र प्रथमयोगे शुभयोगाभावे इत्युक्तम् द्वितीय योगे पापयोगे इत्युक्तम्। तेन प्रथमयोगे शुभ पाप रहित इति वेदितव्यम्।

अस्मिन् ग्रन्थे शुभपापाः वृद्धैरुक्ताः।

"अर्कारमन्दफणिनः क्रमात् क्रूरा यथाश्रयम्।
चन्द्रोऽपि क्रूर एवात्र क्वचिदङ्गारकाश्रये॥
गुरुध्वजकविज्ञाः स्युर्यथापूर्वं शुभग्रहाः"—इति।

अयमर्थः अर्काद्या यथोत्तरं यथाश्रयं क्रूराः। अर्थादर्काद्याः क्रूराः परन्तु पापराशिगता अतीव पापाः। शुभराशिगता मध्य फलाः। एवमेव गुर्वादयः शुभग्रहाः। तेऽपि शुभराशिगता अतीव शुभफलदाः। पापराशिगता मध्यफलाः। अत्रार्कः सा-

मान्यपापः । ततः पापत्वेन बली भौमः । ततः शनिः । ततो राहुरिति । गुर्वादयस्तु यथापूर्वं शुभग्रहाः । अर्थाद्बुधः सामान्यशुभः । ततः शुभफलदः शुक्रः । ततः केतुः । ततो गुरुरिति ।

अयमेवाशयो वृद्धैरप्युक्तः ।

"प्रत्येकं शुभराशिस्थ उच्चस्थो वा बुधः शुभः ।
गुरुशुक्रौ च सौम्यस्थौ ततोऽन्यत्राशुभा स्मृताः" ॥४०॥

दोनों रुद्र–शनि मंगल और चन्द्रमा से देखे जाते हों और शुभ योगाभाव यानी शुभ पाप किसी का योग न हो (१) वा पाप योग हो (२) अथवा मंगल शनि चन्द्रमा के साथ और भी शुभ ग्रह की दृष्टि पड़ती हो तो रुद्राश्रित राशि के अग्रिम राशि की दशा में मृत्यु जानना । विचार दोनों रुद्र से अलग अलग होगा ॥ ४० ॥

यदि शूले मृतिस्तर्हि कस्मिञ्छूले इत्यपेक्षायामाह ।

## शूले चेत् तदन्तशूले ॥४१॥

यदि शूले मृतिस्तर्हि तदन्तशूले मृतिः स्यात् । अर्थाद्यदि रुद्रशूले आयुः समाप्तिस्तर्हि शूलमहादशायां द्वादशराशीनामन्तर्दशासु या रुद्रशूलान्तर्दशा तस्यां निधनमित्यर्थः ।

एतत्सूत्राणामाशयो वृद्धैरुक्तः ।

"पापमात्रस्य शूलत्वे प्रथमर्क्षे मृतिर्भवेत् ।
मिश्रे मध्यमशूलर्क्षे शुभमात्रेऽन्त्यभे मृतिः" ॥

अस्यार्थः यदि द्वौ रुद्रौ पापौ तदा प्रथमशूले मृतिः यदि मिश्रौ तदा द्वितीयशूले मृतिः यदि रुद्रौ शुभौ तदाऽन्त्यशूले मृतिः स्यादित्यर्थः । पापमात्रत्वे शूलस्य इति वृद्धवाक्य समालोचनया सुबोधिन्यां "प्राणिनि शुभदृष्टे रुद्रशूलान्तमायुः"

इति सूत्रटीकायां "प्रथमपञ्चमनवमदशान्तमायुर्भवति"—इति यदुक्तं तदसङ्गतमेव प्रतिभातीति । अन्यच्च वृद्धोक्तो विशेषः ।

"क्राश्रयेषु क्षेत्रेषु शुभानाथाश्रयेषु च ।
निर्याणमीरितं तत् तु शूलर्क्षेष्वेव निर्दिशेत्"—इति ॥४१॥

शूल राशि की दशा में किसी शूल राशि की ही अन्तर्दशा में निधन होता है ॥४१॥

अथापरं विशेषमाह ।

**रुद्राश्रयेऽपि प्रायेण ॥४२॥ क्रिये पितरि विशेषेण ॥४३॥ द्वन्द्वे रुद्रे तदन्तं प्रायः ॥४४॥**

प्रायेण रुद्राश्रितराशावपि मरणं स्यात्। प्रायः शब्दाद्रुद्राश्रयात् पूर्वं परतोऽपि भवतीति सूचितम् ॥ क्रिये मीने लग्ने सति विशेषेण रुद्राश्रितराशौ मरणं भवति ॥ द्वन्द्वे द्विस्वभावराशौ रुद्रद्वये स्थिते सति प्रायस्तदन्तं रुद्राश्रितराशिपर्यन्तं निधनं भवति । अथवा द्वन्द्वे लग्नाष्टमे रुद्रद्वये तदन्तं रुद्राश्रितराशिदशायां मरणं भवतीति ॥४२-४४॥

प्रायः रुद्राश्रितराशिकी दशा में भी मृत्यु होती है मीन लग्न हो तो विशेष कर रुद्राश्रित राशि में मृत्यु होती है—मिथुन में या लग्न से अष्टमराशि में रुद्र ग्रह हो तो भी रुद्राश्रित राशिदशा में मृत्यु होती है ॥ ४४ ॥

अथ तदेव विवृणोति ।

**प्रथममध्यमोत्तमेषु वा तत्तदायुषाम् ॥४५॥**

तत्तदायुषाल्पमध्यदीर्घायुषां प्रथममध्यमोत्तमेषु शूलेषु क्रमेणायुः समाप्तिर्भवतीति ॥४५॥

अथवा अल्पमध्य दीर्घायुवाले का प्रथम द्वितीय और तृतीयशूलराशि की दशा में मृत्यु होती है ॥४५॥

अथ प्रकारान्तरेणायुर्निश्चेतुं माहेश्वरग्रहं लक्षयति।

**स्वभावेशो महेश्वरः ॥४६॥ स्वोच्चे स्वगृहे रिपुभावेशप्राणी ॥ ४७ ॥**

आत्मकारकादष्टमेशो महेश्वरो भवति ॥ ४६ ॥ किन्तु आत्मकारके स्वोच्चे वा स्वगृहे स्थिते तदात्मकारकस्य द्वादशाष्टमेशयोर्मध्ये यो वली स एव महेश्वरः स्यान्नतु स्वभावेशः यत्तु सुवोधिन्यां कारकादष्टमेशो स्वोच्चे स्वगृहेवा स्थिते द्वादशाष्टमेशयोर्मध्ये यो बली स एव महेश्वरः स्यान्नतु स्वभावेशः इत्युक्तं तदसङ्गतं प्रायोऽष्टमेशस्यैव वलवत्त्वदर्शनात् द्वादशेशस्य माहेश्वरत्वाभावात्। तथा च "स्वोच्चे सग्रहेरिपुभावेशपाणी" इति पाठं स्वीकृत्य स्वामिना "कारकोच्चराशौ सग्रहे सति द्वादशेशाष्टमेशयोर्मध्ये यो वली स महेश्वरो भवति इति यदुक्तं तदप्यसङ्गतम्। प्रायोऽस्मिन् ग्रन्थे कारकोच्चराशिमालभ्य फलकथनाभावात् प्रसङ्गाभावाच्च। अथवा कारकादष्टमेशो कारकोच्चराशौ गते वा कारकराशौ गते तदा द्वादशेशाष्टमेशयोर्मध्ये योवलीसमहेश्वरः स्यादित्यप्यर्थः समुचित इति ॥४७॥

आत्मा कारक के अष्टमेश को महेश्वर कहते हैं। परन्तु यदि वह आत्मकारक के उच्चमे वा आत्मकारक के राशि में हो तो आत्मकारक से अष्टमेश और द्वादशेशों में जो वलवान वह महेश्वर ग्रह होता है ॥ ४७ ॥

**पाताभ्यां योगे स्वस्य तयोर्वा रोगे ततः ॥४८॥**

स्वस्य आत्मकारकस्य पाताभ्यां राहुकेतुभ्यां योगे अथवा तयो राहुकेत्वोः कारकाद्रोगेऽष्टमेयोगे सति कारकात्ततः षष्ठो षष्ठाधीशो महेश्वरो भवति। द्वित्राणां महेश्वराणां सम्भवे यो वली स महेश्वरः स्यादिति ॥ ४८ ॥

राहु केतु आत्मकारक के साथ हों या आत्मकारक से अष्टम में हों तो आत्मकारक का षष्ठेश महेश्वर होता है नीलकण्ठने ततः का अर्थ रव्यादिगणना करके आत्मकारक से छठां ग्रह लिखा है सो ठीक नहीं है क्योंकि अक्षरवंश ग्रह का बोध यहाँ नहीं होता ॥ ४८ ॥

अथ ब्रह्मग्रहं लक्षयति ।

**प्रभुभाववैरीशप्राणिपितृलाभप्राण्यनुचरो विषमस्थो ब्रह्मा ॥ ४९ ॥**

अत्र पूर्वं सूत्रात् स्वपदमनुवृत्य "कारकात् षष्ठाष्टमद्वादशेशानां मध्ये यो वली सलग्नसप्तमयोर्मध्ये वलवतोऽनुचरश्चेत् तथाविषमस्थश्च भवेत् तदा ब्रह्मा स्यात्"—इति काशिकायां यदुक्तं तदयुक्तम् । "ब्रह्मा स्वभावेशो भावस्थः"—इति वक्ष्यमाणत्वात् । पितृलाभप्राणीति पदस्य सूत्रमध्ये स्थित्वात् "देहलीदीपक"–न्यायेन लग्नसप्तमयोर्मध्ये यो वली तस्मात् प्रभुभाववैरीशानां पष्ठाष्टमद्वादशेशानां मध्ये यो वली स यदि लग्नसप्तमयोर्मध्ये वलिनो राशेरनुचरः पृष्ठस्थः सन् विषमस्थो मेषमिथुनादिराशिगतश्चेत् तदा स ब्रह्मा भवति । लग्नस्य पृष्ठराशयः सप्तमभोग्याल्लग्नभुक्तपर्यन्तं शेषं सप्तमस्य पृष्ठराशयो भवन्तीति ॥ ४९ ॥

लग्न और सप्तम में जो वलवान हो वहां से षष्ठाष्टम द्वादशाधीशों में जो वलवान वह लग्नसप्तम में जो वलवान उसका अनुचर हो तथा मेषमिथुनादि विषम राशि में हो तो उसे ब्रह्मा कहते हैं । लग्न के भोग्य से सप्तम के भुक्त तक सप्तम का अनुचर और सप्तम के भोग्य से लग्न के भुक्त तक लग्न का अनुचर कहा जाता है ॥ ४९ ॥

अत्र विशेषमाह ।

**ब्रह्मणि शनौ पातयोर्वा ततः ॥५०॥**

शनौ शनैश्चरे ब्रह्मणि प्राप्ते वा वक्ष्यमाणरीत्या पातयो राहु केत्वोर्ब्रह्मणि प्राप्तयोः सतोस्ततः षष्ठः षष्ठाधीशो ब्रह्मा भवतीति ब्रह्म लक्षणाक्रान्तः शन्यादिर्न ब्रह्मा स्यात् ॥ ५० ॥

शनि ब्रह्मा हो वा राहुकेतु ब्रह्मा हों तो षष्ठेश ब्रह्मा होता है।

**ब्रह्मा स्वभावशो भावस्थः ॥५१॥**

आत्मकारकाद्भावेशोऽष्टमेशो ब्रह्मा ।तथा यो ग्रहो भावस्थो ष्टमस्थः सोऽपि ब्रह्मा स्यादिति ॥५२॥

आत्मकारक का अष्टमेश ब्रह्मा होता है तथा आत्मकारक से जो अष्टम में रहता है वह भी ब्रह्मा होता है ।

**बहूनां योगे स्वजातीयः ॥५२॥**

वहूनां ब्रह्मग्रहाणां योगे प्राप्तौ स्वजातीयो योऽधिकांशः स ब्रह्मा भवति ॥५१॥

कई ग्रह ब्रह्मा होते हों तो उनमें अधिकांश ब्रह्मा होता है ॥५२॥

**राहुयोगे विपरीतम् ॥५३॥**

अधिकांशविचारे कर्त्तव्ये राहोर्ब्रह्मत्वयोगे सति तस्य राहोः विपरीतमधिकांशकत्वं स्यादिति ॥५३॥

ब्रह्मा स्वभावेशो भावस्थः इस सूत्र के द्वारा आत्मकारक से अष्टम में राहु हो तो वह भी ब्रह्मा हो सकता है उसका अधि-कांश विपरीत अर्थात् सव ग्रहों से न्यूनांश होने से होता है नीलकण्ठ ने अपनी टीका में लिखा है कि जो ग्रह राहु से संयुक्त हो उसका अधिकांश उसके न्यूनांश होने से जानना सो ठीक नहीं है क्योंकि राहु की गति हर समय विपरीत होती

है और ग्रहों की नहीं होती इस कारण सब ग्रहों से अल्पांश होने पर ही उस राशि में राहु का सबसे अधिकांश चाल वश होगा ॥५३॥

## विवादे बली ॥५४॥

द्वयोर्ब्रह्मयोर्विवादे प्राप्ते यो बलीस ब्रह्मास्यादिति ॥५४॥
कई ग्रह ब्रह्मा हों तो उनमें बलवान ब्रह्मा होता है ॥५४॥
ब्रह्ममाहेश्वरग्रहयोः फलं दर्शयति ।

## ब्रह्मणो यावन्माहेश्वरर्क्षदशान्तमायुः ॥५५॥ तत्रापि महेश्वरभावेशत्रिकोणाब्दे ॥५६॥

ब्रह्मणः सकाशान्माहेश्वरर्क्षदशान्तं स्थिरदशायामायुः कालो ज्ञेयः ॥ तत्रापि महेश्वराश्रितराशिदशायामपि । महेश्वर-ग्रहस्य यो भावेशोऽष्टमेशस्तस्य त्रिकोणस्थराशेरब्दे वर्षदशाया-मिति ॥५५-५६॥

ब्रह्म ग्रह से लेकर माहेश्वर ग्रहपर्यन्त राशि के दशावर्ष को जोड़ कर उतना आयु होता है। उसमें भी माहेश्वर ग्रह का जो अष्टमेश उसके त्रिकोण राशि की दशा में अरिष्ट जानना ॥५५-५६॥

अथ मारकग्रहान् मारककालंच लक्षयति सूत्रैः ।

## स्वकर्मचित्तरिपुरोगनाथप्राणीमारकः ॥५७॥ चित्त-नाथः प्रायेण ॥५८॥ तद्दशायां निधनम् ॥५९॥ तत्रापि कालाद्रिपुरोगचित्तनाथापहारे ॥६०॥

स्वादात्मकारकाल्लग्नाद्वा कर्मचित्तरिपुरोगनाथानां तृतीय-षष्ठद्वादशाष्टमेशानां मध्ये यो बली स मारक ग्रहो भवति । तत्र चित्तनाथो यो लग्नात् कारकद्वा षष्ठेशः स प्रायेण

मारकः॥ तस्य मारकग्रहस्य राशिदशायां निधनं मारकाश्रयीभूतराशिदशायां मारकस्वामिराशिदशायां वा मारकग्रहस्य नाक्षत्रदशायां निधनं स्यात् तत्रापि मारकराशिदशायां मारकग्रहदशायामपि वा कालात् कारकसप्तमाज्जन्मलग्नसप्तमाद्वा षष्ठाष्टमद्वादशेशानामपहारेन्तर्दशायां निधनं स्यात्। एषां मध्ये वलवतोऽन्तर्दशायां निधनं कल्पनीयम्। ॥५७-६०॥

आत्म कारक अथवा जन्म लग्न से तृतीय षष्ठ द्वादश और अष्टम के स्वामियों में वलवान मारक ग्रह होता है। षष्ठेश विशेष कर मारक होता है। मारक जिस राशि में हो उसकी दशा में वा उस ग्रह के नाक्षत्र दशा में निधन कहना। उसमें भी सप्तम से द्वादश अष्टम और षष्ठ इनके स्वामियों की अन्तर्दशा में मरण होता है ॥५७-६०॥

अत्र विशेष माह।

"षष्ठाष्टमेशौ भवतो मारकावष्टमेश्वरः।
प्रायेण मारको राशिदशास्वत्र विशेषतः॥
षष्ठभे पापभूयिष्ठे षष्ठेशो मुख्यमारकः।
षष्ठात् त्रिकोणगो वाऽपि मुख्यमारक इष्यते॥
मध्यायुषि मृतिः षष्ठदशायामष्टमस्य वा।
षष्ठात् त्रिकोणस्य पुनर्दीर्घाल्पविषये भवेत्॥
षष्ठे वलयुते तस्य त्रिकोणे मृतिमादिशेत्।
षष्ठेशश्चेद्वलाढ्यः स्यात् तत्त्रिकोणे मृतिं वदेत्॥
व्यवस्थेयं समस्ताऽपि कारकादिदशास्वपि।
वलिनः शुक्रशशिनोर्ग्राह्यं—षष्ठाष्टमादिकम्॥
चरे चरस्थिरद्वन्द्वा इति यो राशिरागतः।
स एव मारको राशिर्भवतीति विनिर्णयः॥
वहुराशिसमावेशो वलवान्मारकः स्मृतः।

चर इत्यादिनाऽयुर्यत् तत्समाप्त्युचितो भवेत् ॥
यो राशिः स तु विज्ञेयो मारकः सूत्रसम्मतः ॥ ६० ॥

## इति जैमिनिसूत्रे द्वितीयाध्यायस्य प्रथम पादः ।

---

**रविशुक्रयोः प्राणी जनकः ॥१॥ चन्द्रारयोर्जननी ॥ २ ॥ अप्राण्यपि पापदृष्टः ॥ ३ ॥ प्राणिनि शुभदृष्टे तच्छूले निधनं मातापित्रोः ॥४॥ तद्भावेशे स्पष्टबले ॥५॥ तच्छूल इत्यन्ये ॥६॥ आयुषि चान्यत् ॥७॥**

अत्र पित्रादीनां निधनकालं ज्ञापयितुं तत्कारकं दर्शयति । रविशुक्रयोः सूर्यसितयोर्मध्ये वली स पितृकारकः स्यात् ॥ चन्द्रभौमयोर्मध्ये यो वली स मातृकारकः स्यात् ॥ रविशुक्रयोश्चन्द्रारयोश्च मध्ये यो दुर्वलः स पापदृष्टश्चेत् तदा सोऽपि यथाक्रमं पितृमातृ कारकः स्यात् यद्युभौ समवलौ स्यातां तदावुभावपि कारकसंज्ञां लभेते इत्यर्थः ॥ प्राणिनि वलिनि कारके शुभदृष्टे सति तच्छूले तत्रिकोणदशायां यथाक्रमं मातापित्रोर्निधनं स्यात् ॥ अप्राणिकारकस्यप्राणिकारकस्य वाऽष्टमेशे स्पष्टवलेऽधिकवले सति अष्टमेशाश्रितराशितस्त्रिकोण राशिदशायां पितुर्मातुश्च निधनं स्यात् ॥ पित्रादिकानामायुर्विचारेऽन्यदपि प्रकारान्तरं चिन्त्यम् ॥१...७॥

सूर्य और शुक्र में बलवान पितृकारक ग्रह होता है, चन्द्रमा और मंगल में वलवान मातृ कारक कहा जाता है दुर्वल यदि पापग्रह से देखा जाय तो वह भी कारक होता है। बलवान कारक शुभ ग्रह से देखा जाय तो उसके त्रिकोण राशि की दशा

